THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 171.

# स्वानुभवादर्शः

श्रीमत्परमहंसपरिव्राजकाचार्य-
नारायणाश्रमशिष्यमाधवाश्रम-
विरचितः ।
स्वकृतटीकाविभूषितश्च
सीतारामशास्त्रिणा परिशोधितः ।



# SVÂNUBHAVÂDARŚA

WITH A COMMENTARY BY

MÂDHAVÂŚRAMA PUPIL OF

NÂRÂYAṆÂŚRAM;

Edited by

Sitâ Râm Sâstri Senday.

FASCICULUS I.

*PUBLISHED AND SOLD BY THE SECRETARY.*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS - OTTO HARRASSOWITZ LEIPZIG
PANDIT A. JYESHTHÂRÂMA MUKUNDAJI BOMBAY:
PROBSTHAIN & CO, BOOKSELLERS, LONDON

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYÂ VILÂSA PRESS

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितमव्यामशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तवक — १७१

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां, प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकःस्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्यो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं — मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तवकम् — " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्यमाणा ग्रन्थाः— मुद्रिताः स्तवकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | (संस्कारः) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | (व्याकरणम्) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। | | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायण तीर्थ विरचित भाष्यभाषा प्रकाशसहितम्। सं० | (वेदान्त) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | (ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः। महामहोपाध्याय- श्रीगागाभट्ट विरचितः। तर्कपादः | (मीमांसा) | २ |

THE

# CHOWKHAMBÂ SANSKRIṬ SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS

NOS. 171 & 256.

# स्वानुभवादर्शः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्य
नारायणाश्रमशिष्यमाधवाश्रम-
विरचितः ।

स्वकृतटीकाविभूषितश्च
सीतारामशास्त्रिणा परिशोधितः ।

---

## SVÂNUBHAVÂDARSA

WITH A COMMENTARY BY
MÂDHAVÂSRAMA PUPIL OF
NÂRÂYANÂSRAMA;
Edited by
Sitâ Râm Sâstri Senday.

---

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES
AGENTS: OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY.
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilâs Press, Benares*

1917

*Price Rupees two.*

## स्वानुभवादर्शस्य

## ( भूमिका )



धन्योऽस्ति सच्चिदानंदघनः परमात्मासर्वपरिच्छेदवर्जितो नित्य शुद्धबुद्धमुक्तसत्यस्वभावः सर्वज्ञः सर्वशक्तिः सर्वगन्धः सर्वरसः स्वात्मारामो ब्रह्मनिष्ठश्रोत्रियसद्गुरुद्वारेणाखिलबन्धहरः परमदयालुः सर्वान्तर्यामीसर्वसाक्षीसर्वशुभाशुभयथार्थफलदातासर्वविद्यासर्वशास्त्रादिविविधकलाकलापद्रष्टासन्स्वयमेवसद्गुरुंश्रोत्रियं ब्रह्मनिष्ठं प्रापय्य सर्वमुक्षून्सर्वस्माद्दुःखान्मोचयन्स्वात्मैक्यज्ञानेनपरमनिर्वाणकैवल्यस्वरूपंनिजब्रह्मानन्दाग्द्वितीयंस्वस्वरूपस्थितिंस्थिरांप्रापयतीव लोकवत्तुलीलाकैवल्यंकरोतीवच, नवस्तुतः किञ्चित्करोति, पूर्णरूपेणास्ते, ननिरोधोनचोत्पत्तिर्नवद्धोनचसाधकः॥ नमुमुक्षुर्नैवमुक्तइत्येपापरमार्थता इत्यादि प्रामाण्यात्। एतादृशपरमानन्दसाक्षात्कारप्रदर्शकोऽयंस्वानुभावादर्शग्रंथ आदर्शइवमुपप्रतिबिंबम्। उत्तमानांमुमुक्षूणांपरमहंसपरि व्राजकानां साधनचतुष्टयसपन्नानांसंन्यासिनां परवैराग्यवतांपुरुषधौरेयाणामर्थेपरमकृपया श्रीमत्परमहंसपरिव्राजकाचार्य्यपूज्यपाद नारायणाश्रमस्वामिशिष्य ब्रह्मनिष्ठवेदान्ताचार्य्यमाधवाऽऽश्रमस्वामिभिः कृतोऽस्ति, ओजः प्रसादगम्भीरादिसद्गुणयुक्तो मुमुक्षुजनमनोहरोललिताऽनेकविचित्रपदयुक्त इत्यालोच्यमुमुक्षूणां परमानन्दप्रदत्येनचालस्य पाठशालीयश्रेष्ठपण्डितद्वाराशोधनादिभिः सुपरिष्कृत्यवावूहरिदासात्मजविद्याविनोदरसिकजयकृष्णदासेनश्रेष्ठिनास्वकीयविद्याविलासनाम्निसीरीजयन्त्रालयेमुद्रापयित्वाऽयंग्रंथरत्नमूतः सर्वमुमुक्षुजनानन्दावासयेऽतीवयत्नेन प्रकाशितोऽयञ्चदर्शनमात्रेणमुमुक्षूणांपरमानन्ददायकएवेतिकिमिवबहुश्रमइतिपरमदयालुंजगदीश्वरंसर्वेशं सर्वशक्तिंसच्चिदानन्दमूर्त्तियहुमानपुरः सरं प्रार्थयामोयदेतादृशभयानकसमयेपि परमानन्दंप्रापयतिकिंचसङ्ग्थादिलाभेनविज्ञजनसमागमेनचपरमानन्दभरितेनमनसापरमसंतोषामृतं प्राप्ता इति सर्वजनमङ्गलमेवाशास्महे—

श्रीमदूर्ध्वाम्नायकाशीकैवल्यधामनि
सिनः प्रज्ञानानन्दसरस्वतीस्वामिनः
सर्वमुमुक्षुपरमहितैषिणः॥

( ब्रह्मघाट )

# सूचीपत्रम्


| | | |
|---|---|---|
| १ | मङ्गलाच० १ | |
| २ | गुरुशास्त्र विचारं विना अतिदूरतरं स्वरूपम् | ५ |
| ३ | गुरुशास्त्रबोधेन, निकटं स्वरूपम् | ५ |
| ४ | विचारं विनासुलभं न स्वरूपम् | ५ |
| ५ | साधन चतुष्टयं विना, न वेदान्तविचाराधिकारः | |
| ६ | हरिगुरुभक्तिरेव विचार सहकार्णिका | ७ |
| ७ | सर्वज्ञेश्वर प्रोक्तत्वेन वेदाऽपौरुषेयत्वम् | ८ |
| ८ | श्रुतीनां स्वतः प्रमाणत्वम् | ९ |
| ९ | विचारफलं संदेहादिनिरासः | ९ |
| १० | अन्यनिरपेक्षत्वेन ज्ञानस्य तमोनिवर्तकत्वम् | १० |
| ११ | वेदान्तमते दृग् दृश्यौ द्वौ पदार्थौ | १० |
| १२ | सर्व वेदान्तस्य शुद्धं ब्रह्म प्रतिपादकत्वं न क्रियापरत्वम् | १३ |
| १३ | आत्मस्वरूपा मुक्तिस्तज्ज्ञान बोध्या,न कर्मलभ्या | १३ |
| १४ | कर्मोपासनाकाण्डस्याऽन्तःकरणशुद्धिजनकत्वं मन-स्थिति हेतुश्च | १४ |
| १५ | अविद्यानिवृत्तिरेव मोक्षः | १५ |
| १६ | बन्धमोक्षौ न वास्तवौ नित्यमुक्तात्मनः | १५ |
| १७ | अविद्यानिवृत्तिः प्रमाणसाध्या, तच्च वेदान्तमहावाक्यमेव | १६ |
| १८ | धीवृत्त्यवच्छिन्नचितिः प्रमाणम् | १७ |
| १९ | वृत्तिज्ञानगतं प्रामाण्यं स्वत एव गृह्यते | १९ |
| २० | तत्त्वमस्यादिवाक्यजन्यब्रह्माकारावृत्तिरेव ब्रह्मविद्या, तया सर्वाज्ञाननिवृत्तिः | २२ |
| २१ | महावाक्यस्याऽपरोक्षज्ञानजनकत्वं ब्रह्मप्रमेयस्याऽपरो-क्ष्यात् | २२ |
| २२ | अधिष्ठानसत्यत्वमेव प्रपञ्चसत्यत्वम् | २४ |
| २३ | समाधिकाले सर्वमतेऽद्वैतं वेदान्तिमते सदाऽद्वैतम् | २५ |

२४ आत्मैवसमाधिः २६
२५ मायाया अघटनापटीयस्त्वम् २७
२६ स्वानुभवाऽनुवादेन प्रपञ्चबाधितत्वम् २८
२७ अज्ञान दुःखादीनां मिथ्यात्वम् ३०
२८ ज्ञानिनोनप्रारब्धभोगेन, कापिक्षतिः ३१
२९ औपाधिकं कर्तृत्वादिकम् ३३
३० आविद्यकमपि कर्म कृष्णार्पितं मन. शुद्धिकरम् ३३
३१ कर्मज्ञानयोर्नसम समुच्चयः ३४
३२ मूढ बुद्धयोः प्रारब्धभोगसाम्येपि विज्ञस्य हर्षविषादराहित्यम् ३८
३३ अहं सुखी दुःखीति प्रत्ययोपि भ्रान्तिरेव ३८
३४ आरोपितस्य मिथ्यात्वमेवाऽधिष्ठान सत्ता शून्यत्वमेव ३८
३५ ज्ञानं धर्मिमात्रेऽभ्रान्तं प्रकारे मिथ्या ३९
३६ ज्ञानस्य स्वप्रकाशत्वमेव सर्वसाक्षित्वात् ३९
३७ अज्ञानादि सर्वद्वैतस्याऽनिर्वचनीयत्वम् ४०
३८ सत्ता ज्ञाने विहायाऽज्ञानस्यैऽऽवानन्दाच्छादकत्वमेव ४२
३९ अज्ञानस्य शक्तिद्वयं वेद प्रमाणसिद्धं ४४
४० द्वैत सत्यत्वभावनया भयमेव ४५
४१ महावाक्यविचारसमकालमेवमोक्षो मायादुःखादिबाधः ४५
४२ ब्रह्मैवेदमित्यत्र बाधसामानाधिकरण्यम् ४६
४३ यदज्ञानत उत्पद्यते तन्मृषा तस्य ज्ञानेन बाधो, न कर्मणा ४७
४४ उपाधि बाधे सर्वस्य बाधः ४७
४५ प्रारब्धकर्मनाशात्सर्वं प्रतिभासनाशः ४८
४६ केनापि प्रमाणेन न द्वैतसत्यत्वं ४९
४७ ब्रह्माभिन्नस्यत्रैकालिकात्यन्ताभाव निश्चय एव बाधः। ४९
४८ ब्रह्मज्ञान समकालमेव सर्वं द्वैत बाधः ५०
४९ व्यापित्वान्नित्यत्वात्सार्वात्म्याच्च ब्रह्म, देशकालवस्तु परिच्छेदशून्यं ५३
५० उत्पत्तिस्थितिलय श्रुतिबलेन, ब्रह्माऽभिन्ननिमित्तोपादानकारणम् ५४
५१ विलक्षणब्रह्मणो विलक्षणकार्योत्पत्तिः ५४

५२ स्वप्नदृष्टान्त सत्वात् सर्वप्रपञ्चो ब्रह्मविवर्त्तः ५४
५३ अतात्त्विको ऽन्यथाभावोविवर्त्त इति विवर्त्तलक्षणम् ५५
५४ स्वानुभवेन, मायेन्द्रजाल तुल्यं नामरूपक्रियात्मकं जगत् ५७
५५ यस्मिन्नदोऽध्यस्ततयाविभाति तत्परमार्थवस्तु नित्यज्ञान-स्वरूपम् ५८
५६ अन्तर्बहिः सदैकरूपं परमार्थसत्यं ततोऽन्यत् सर्वमिथ्यैव ५८
५७ अन्यस्मिन्नन्यावभासोऽध्यासो गुडस्तिक्त इत्याद्युदाहरणम् ५९
५८ सत्यमिथ्यारूपमतोन शून्यता ५९
५९ व्यापकस्यापि स्वर्गादिषु भ्रमणमुपाधिवशाज्जन्मादि चेद-मैवेन्द्रजालम् ६०
६० अधिष्ठानसत्तया द्वैतसत्यत्वप्रतीतिः ६१
६१ समसत्ताको ऽन्यथाभावः परिणामो विषमसत्ताकोऽन्यथा भावो विवर्त्तः ६३
६२ द्विगुणमूल्यवृद्धिदोषेण कार्यकारण भेदवादो वेदविरुद्धः ६४
६३ सत्यज्ञानं ब्रह्मैवेदं सर्वं वाचारम्भणं विकारो नेहनानास्ति किं च नेत्यादिश्रुतिबलेन ब्रह्मनित्यं द्वैतं मिथ्या ६७
६४ अह मस्मिपरं ब्रह्मेति ज्ञानेन, सर्वभयनिवृत्तिः ६९
६५ स्त्री पुरुषादिकं ब्रह्मणि कल्पितम् ७१
६६ अहङ्काराध्यासः सर्व दुःखबीजम् ७२
६७ द्वैतदेहादि सम्बन्धभानं ब्रह्मण्य सङ्गे मिथ्यैव ७३
६८ स्त्री पुत्रादिषु ममत्वप्रतीतिर्भ्रान्तिरेव ७३
६९ जाग्रदादि सर्वं मिथ्यैव
७० उपाधिना ब्रह्मणो नानात्वप्रतीतिः ८१
७१ प्राणस्यक्षुत्पिपासामनसः शोकमोहता जरामृत्युरोगाः शरीरस्य, जाग्रत्स्वप्न सुषुप्त्यादयोऽवस्था बुद्धेरहं निर्विकार एव इति ज्ञाने, सर्वभ्रमनिवृत्तिः ८६
७२ लिङ्गोपाधि सम्बन्धो जन्म, तद्वियोगो मृत्युः ९०
७३ प्रमाण नियन्धनं कर्तृत्वं भोक्तृत्वं च अन्तःकरणवृत्त्यवच्छिन्नः प्रमाता प्रमाणञ्च ९०
७४ प्रमातृद्वारा शुद्धस्यैव बन्धमोक्षकल्पना ९२
७५ निर्विषयज्ञानमेवात्मा ब्रह्मेति ज्ञाने, सर्वद्वैतबाधः ९३

७६ ब्रह्मात्मत्वं स्वतः सिद्धं, जीवत्वं तु मृषा ९४
७७ सर्वभ्रान्तिनिवृत्तौ कृष्णोहमिति स्वरूपस्थितिरेवमोक्षः ९५
७८ आत्मनो नित्यत्वान्नगुणी,नापि गुणा,यथार्थाः
७९ इच्छादिगुणानुद्देनात्मनः
८० सर्व साक्षित्वादात्मा न गुणीनापि जडः १०२
८१ द्वैतपारमार्थिकत्वे, वस्तु परिच्छेद सत्वेन, ब्रह्मणोऽनित्यत्वं ब्रह्म शब्दार्थहानिश्च १०४
८२ सत्यपुरुषान्यतारूपो मोक्षो वेदविरुद्धः ईश्वरानङ्गीकारेऽपच न धर्मज्ञानसिद्धिः १०४
८३ आत्मनो जडाजडोभयरूपतानास्ति १०७
८४ ब्रह्मात्मैक्यज्ञानेन मुक्तिर्न कर्मणा १०७
८५ द्वैतानुवादकत्वेन द्वासुपर्णेति वाक्यं न भेदसाधकम् १०७
८६ प्रत्यक्षप्रमाणेन न द्वैत सत्यत्वसिद्धिः १०९
८७ तथा ह्यनुमानेनापि १०९
८८ ब्रह्मणोर्जीव भेदेऽनित्यत्वं ११०
८९ आभासो न पृथक् इति व्याप्ति बलेनापि, न भेदसिद्धिः १११
९० प्रतिबिम्बस्य स्वरूपं न बिम्बात्पृथगस्ति ११२
९१ जीवेश्वरभेदवादिनो वेदबाह्याः ११३
९२ उपाधिनाभेद प्रतीतिर्वस्तुतस्तु नैव । ११३
९३ नासतः सतश्च भेदः सिद्ध्यति ११४
९४ त्रिविधभेदशून्यत्वमखण्डस्वामिति सर्व वेदान्तसिद्धान्तः ११५
९५ प्रमाताप्रमाणादि सर्वं भेदो मिथ्यैव ११७
९६ मिथ्या भूत गुरुशास्त्रतोपि ब्रह्मोपदेशः मिथ्याभूतेनापि प्रतिबिम्बेनबिम्बसिद्धिः ११८
९७ पर प्रकाशेऽनवस्था तेन आत्मास्वप्रकाश नित्यपरमानन्दस्वरूपः १२०
९८ ब्रह्माहमस्मीतिवृत्तिः सकलाऽज्ञानं प्रनाश्य फतकरेणुवत्स्वयमपि नश्यति १२०
९९ संबन्धत्रयप्रतिपादनम् १२१
१०० भागत्याग लक्षणया अखण्डार्थत्वम् १२२

१०१ अत्रार्थद्वैतिभिः शास्त्रार्थत्वम् १२३
१०२ तत्वमस्यादिवाक्ये गुणगुणिजातिव्यक्त्याद्य सम्भवप्रदर्शनम् १२३
१०३ वृत्तिव्याप्तिफलव्याप्तिनिरूपणम् १२४
१०४ जडेफलव्याप्त्यापिचेतनेवृत्तिव्याप्तिरेव १२४
१०५ लक्षणामार्गेणापिज्ञानकर्मतानास्ति १२४
१०६ आनन्दांशे आच्छादनं तत्सोहमस्मीति ज्ञानेननिवर्तते १२५
१०७ विधिनिषेधद्वारेणवेदान्ताद्वितीये तद्विदांप्रवृत्तिः। १२६
१०८ स्तुति सादृश्यकर्मकारण जाति
व्यक्ति गुणगुण्यात्मकन्तत्वमसिवाक्यंनभवितुमर्हति
औपचारिक
मुपासनापरंवापिनास्ति जीवरूपेणे श्वरस्यैवप्रवेशश्रवणात् १२६
१०९ वेदान्तवाक्यैरनुभवेच अखण्डार्थत्वं ज्ञातंनान्यथा १२७
११० बोधात्प्रागेववंधादिकल्पनापि १२९
१११ बोधानन्तरं सर्ववाक्यसं शयनिरासः २१
११२ ब्रह्मात्मैक्य ज्ञानंविनान सर्वदुःखनाशः १२९
११३ अध्यात्मविद्यासर्वविद्यासुश्रेष्ठा १२९
११४ अनात्मविद्यासुमोक्षोपि गौणएव १२९
११५ अस्यटीकायामनेकविधमोक्ष प्रतिपादनम् १३०
११६ काव्यादिषु सर्वरसापेक्षयाशान्तरसः एवमुख्यः
११७ ज्ञाताज्ञातत्वेन कृपणब्राह्मणी १३२
११८ आत्मैक्यज्ञानंविनानमोक्षसिद्धिः १३३
११९ यावत्परिच्छिन्नबुद्धिस्तावदेव तीर्थयात्रादि गमनं। १३४
१२० उपास्य तारतम्येनमोक्षतारतम्यं। १३४
१२१ उपासनाभिःक्रममुक्तिरुक्तासमग्रदुःखाऽज्ञानना शाऽभावात् १३६
१२२ भावना बलाधा ज्ञान नाशस्तस्या अज्ञानाऽवि रोधि त्वात्। १३६
१२३ ज्ञानोत्तरं नवासनाभिर्हानिस्तस्याबाधित्वात् १३७
१२४ उपासकात्तत्व ज्ञानिनोविशेषः १३८
१२५ ज्ञानिनः कोपिविधिर्नास्ति १३९
१२६ यस्य ज्ञेयकार्यं समाप्तिः सएव तत्वविन्मुख्यः। १३९

१२७ स्वदृष्ट्या स्वयंनिर्विशेषोज्ञानी १४१
१२८ संन्यासिन सर्वोत्कृष्टत्वम् १४१
१२९ ज्ञानिनो नयथेष्टाचरणं संभवति १४१
१३० ज्ञानिनां जीवतएव सर्वपाप पुण्यनिवृतिः १४२
१३१ वास्तव सन्यासी प्रायशोदुर्लभएव १४३
१३२ साधन चतुष्टयसंपन्नाधि कारिणः सद्गुरु प्रसादात्स्वाप
रोक्षानुभवः १४३
१३३ उपनिषदंविनानान्यप्रमाणेनात्मबोधः १४४
१३४ { अभावप्रमाणेन भावसिद्धानुपपत्त्या
वैष्णवपदस्यानुभूतेप्रमाणंमुख्यम् १४५
१३५ अत्रचित्रंवटेतिवृद्धवचनं प्रमाणम् १४५
१३६ श्रीकृष्णवाक्यप्रमाणेन ज्ञानी कृष्ण स्वरूपमेव १४५
१३७ पराभक्तिस्वरूपज्ञानादपिन भेदसिद्धिः १४६
१३८ अधिकारिस्वरुचिभेदाद् भक्ति भेदः शास्त्रभेदोपि १४६
१३९ अन्तेसत्सम्प्रदायाचार्य्यप्रणामोमङ्गलत्वरूपम १४७
१४० पूर्वाज्ञार्थ्योक्ति श्रुतियुक्त्यनुभवपर्योलवर्नातमेवायमिति १४७

( इति स्वानुभवादर्शसूचीपत्रम् )

# स्वानुभवादर्शस्य

## अनुक्रमणिका ।

—:०:—

### अ.

अकर्त्ताऽपि सन् कर्तृतां प्राप्य मोहात् ... ... १२२
अकार्यं न कर्ता करिष्येऽहमेतत् ... ... १२४
अकृत्रिमानन्दनिजस्वरूपम् ११८
अघटनघटनापटीयसीयम् २९
अतिदूरतरं निजस्वरूपम् २
अथ तत्त्वमसीति वेदवाक्यात् २३
अधिष्ठानचैतन्यविज्ञानसिद्धौ ८०
अधिष्ठानचैतन्यसिन्धोर्लहर्यः ८१
अधिष्ठानसत्त्वेन तस्याऽस्ति सत्त्वं ... ... ५२
अध्यात्मविद्या परमा हि विद्या १८३
अनादिषट्कस्य निरूपणं बुधैः १८१
अन्तर्बहिश्चातिचयप्रमाणात् १६७
अभावेन भावस्य सिद्धेर्न हि स्यात् ... ... २०९
अमनस्कतया न मेऽस्ति चिन्ता १००
अय प्रकारः सदसद्विलक्षणः ५१
अलं बहूक्तेन बहुप्रकारैः ८४
अविद्यानिवृत्तिः प्रमाणेन साध्या ... ... १९
अविद्यानिवृत्त्यर्थमेवेह शास्त्रम् ... ... १७३
अशब्दमस्पर्शमरूपमव्ययम २०६
अष्टौ रसान् यान् मधुरादिषड्सान् ... ... १८४
असङ्गस्य बन्धो न सम्भावनीयः १८
असोः क्षुत्पिपासे धियः शोकमोहौ ... ... १०७
अहो हि माया बलमेतदुच्चैः ५०
अहंग्रहोपासनया नराणाम् १८९
अज्ञानधीः प्राणहृषीकदेहे १०६
अज्ञानमेतत्सकलं व्यलीकं ३५
अज्ञानसंशयविपर्ययचेतनानाम् ... ... १७२

### आ.

आकाशादेर्नित्यता कल्प्यते चेत् ... ... १३७
आत्मच्छायाध्यासबुद्धेः प्रवेशा ९१
आत्मस्वरूपा हि विमुक्तिरुक्ता १५
आत्मान्यत्वादन्तरिक्षं मनोऽणु ... ... १३६

आनन्दांशो यत्समाच्छादनं तत् ... ... १७८
आम्नायसूत्रे सकले हि वेदं १४
आवियकं यदपि कर्म तथाऽपि सर्वम् ... ... ३९
आविर्भावापादकं यत्स्वरूपं ५४

इ.

इच्छादयो ये परिकल्पिता गुणाः ... ... १३४
इन्द्रं मित्रमिति श्रुतिर्हि बहुधा सन्तं वदत्येकधा १५८

उ.

उदरमन्तरकं कुरुते यदा १५०
उपादानचिदाद्दशी तादृगेवा- ७५
उपादानचिदात्मनन्वहिवो ७४
उपाधिनाशेन विना न चास्य ६२
उपाधिसत्वात्प्रतिबिम्बसत्व १५४
उपासनानां बहु तारतम्यम् १८८
उपासनाभिः क्रममुक्तिदा १९१

ए.

एतद्गुहाऽऽरोपितश्चाऽविवेकात् ... ... ११४
एतन्मनुष्येषु जनुः सुदुर्लभम् १८५
एतादृशेऽपि ममता न युक्ता ९६
एवं श्रुतिन्यायविचारणेन ८६

क.

कर्ता भोक्ताऽहं प्रमात्रैकमूलः ११३
कर्माधवशः सर्वलोकाधिवासो ... ... १०३
क च परमसुखं निजस्वरूपम् ... ... ३०
क च वत निरहङ्कृतिर्ममाऽऽत्मा ३२
क च मम चिन्तिता क तच्च मौढ्यम् ... ... ३१
क च मम निरुपाधिरूपमेकं ३३
क च ममासुविरागितास्वरूपम् ३४
कार्योत्पादे या समर्थाऽस्ति शक्तिः ... ... ५५
कालेयत्ता नाऽस्ति मे नित्यतायाः ... ... १०८
काश्यां मूढो द्वारकायां प्रभासे ... ... १८७
काश्यां मृत्योर्मोक्ष इत्याहुरेके १८६
किमपि मोहवशात्त्वधिदैवतं ... ... ९३
किं गौतमीयैः कणभुग्वचोभिः ... ... १३३

च.

चेत शुद्धो चेतसः स्थैर्यकार्ये १७

ज.

जडं न सत्ताऽपि च चित्स्वरूपं ४९
जाग्रत्स्वप्नसुषुप्तिकासु यदनुस्यूतं च तत् सिद्धिकृत् १२५
जातः प्रबोधेन गुरुर्युवैव २१०
ज्ञानचेन्नास्ति वैराग्यलेशः १२०
जाने न जानेऽहमिति प्रतीते १४१
जीवाद्भिन्नं ब्रह्म युष्मन्मते चे१५१
जीवा नियम्या भगवान्नियन्ता ८५

त.

तर्कोऽप्रतिष्ठो न हि येन मानः १४९

तस्मादखण्डैकरसं विशुद्धम्१८०
त्रैगुण्यमात्रविषयाः खलु कर्म-
वेदाः ... ... ९७

द.

दृष्ट्वा परं ब्रह्म रसाद्भिवृत्तिः २०२
देवस्तिर्यङ्मर्त्यसंघोऽण्ड-
जाद्यैः ... ... १०२
देहाभिर्यत्सर्वमर्मस्थलेभ्यो १०४
द्रष्टा नाऽहं दृश्यमिथ्यात्व-
हेतोः ... ... १०९

ध.

धिक्संसारमिमं न यत्र परमं
शर्मास्ति यल्लभ्यते ... १२१
धीवृत्यवच्छिन्नचितिः
प्रमाणम् ... ... २०
धैर्येण शौर्येण च धीवलोकः ४९

न.

न कर्मविज्ञानसमुच्चयः स्यात् ४०
न तद्यात्तलिङ्गं किमप्यस्ति
तस्मिन् ... ... २०७
न दोषदृष्टिर्न विरागलेशो ५
न नामरूपादपरं स्वरूपम् ६९
न विम्बधर्मो न च वाऽप्युपाधेः१५०
न वासनानां वशवर्तिताऽस्य१९५
न हि निर्मथनं विनेन्धनाग्निः ३
नानाकृतैः सोमपानादि कृत्वा११९
नाऽन्योऽतोऽस्तीत्यादि वेदे
निषेधा ... ... १५७
नाहं षण्ढो नैव योषित्पुमान् वा९०
नाहं सूक्ष्मं सप्तपञ्चात्मकं यत्९९
नाहं स्थूलं सप्तधातुस्वरूपम् ८९
नित्यादिसाधनचतुष्टय-
सम्पदुच्चैः ... ... २००
निरतिशयसुखं यत्प्रत्यगात्म-
स्वरूपम् ... ... १३
निर्मथ्य वेदान्तसमुद्रमेनत् २१४
नैकस्य दुःखेन समस्तजीवे १३०
नैवाऽऽश्लेषः पुण्यपापक्रियायाः२०३
न्यग्रोधबीजमिव यत्खलु सर्व-
बीजम् ... ... १०५

प.

पदार्थद्वयं दृक्च दृश्यं ततो-
ऽन्यत् ... ... ११
परस्मिन् परस्याऽवभासोऽत्र
सद्भिः ... ... ७१
पातञ्जलं योगसूते समस्तम् १४२
पित्रोर्मलोद्भूततनोरसूनाम् १११
पूर्वाचार्योच्छिष्टलेशोऽप्युक्तो २१५
प्रत्यक्ज्ञप्त्याख्यातधीवृत्तियोगो११२
प्रत्यग्भावात् याज्ञवल्क्ष-
णायाः ... ... १७७
प्रपञ्चमिथ्यात्वसुदर्शनेन १६१
प्रपञ्चसत्यत्वनिरूपणेन ७७
प्रमाणजन्योऽतिशयो न शब्दः२०८
प्रयोजनं नास्ति फलस्य
किञ्चित् ... ... १७६
प्रज्ञावनत्वात्स्वगतोऽपि भेदो १६२
प्राणोत्क्रान्तिर्नाऽऽधुना मे भ-
वित्री ... ... १९३
प्रातीतिकं यद्व्यवहारकाले ८३
प्रामाण्यं यच्छ्रुतं तत्त्वतो हि २१

व.

वल्हीभिरन्याभिरभेदवोधे १४६
वाधस्याऽर्थापत्तितो दृश्यजातम् ६३
वुद्धिस्थदुःखं निज आत्मनीदं ४६
वोधात्पूर्वं तन्मृषा चोत्तरं वा १६९
ब्रह्माकारा तत्त्वमस्यादिवाक्यै २२
ब्रह्मातिरिक्तं न हि किञ्चिदन्य ५८
ब्रह्मात्मता मे न हि कृत्रिमा-
ऽस्ति ... ... ११७
ब्रह्मात्मविज्ञानमृते नराणाम् १८२
ब्रह्मात्मानौ चक्षुरादेरयोग्यौ १४७
ब्रह्माहस्मीति च वाक्यशेष १६३
ब्रह्माज्ञानं स्वाऽनुभूत्या ममा-
ऽऽसीत् ... ... ६१
ब्रह्मैव सर्वं जगदित्थमेका ५७
ब्रह्मैवेदमिदं हि वाक्यमुदितं
वेदे तदर्थस्त्वयं ... ५९

भ.

भगवत्प्रतिविम्ब एव
जीवः ... ... ५१६
भयं द्वितीयाद्भवतीति वेद ५६
भीतिर्मनोवृत्तिरिव द्वितीया ८८
भूच्छिद्रगोमूत्रभुजङ्गमाला १२७
भेदं विना काऽनुपपत्तिरास्ति १४८
भोक्ता भोज्य प्रेरितारञ्च मत्वा १६४
भ्रान्त्या कृतानां खलु कर्मणां
मया ... ... ३७

म.

मत्सन्निधानान्मम सत्तया च १३१
मनोमयी मांसमयी विधात्रा ९४
ममाऽत्र देहे सकलार्थभासकम् १२९
माता मानं मेयमेतद्द्विशिष्टम् १६६
मिथ्याभूतादन्यतो विभक्तो
धोः ... ... १७०

य.

यतो वा इमानीति वेदोक्त-
रीत्या ... ... ६७
यथा मणिः स्वाश्रयनीलपीत १०१
यथा रज्जुरभ्रेऽन्यथा भाति पुंसां ६९
यथा वस्तुविज्ञानतश्चिद्विवर्तः ७६
यथा स्वाश्रयं मोहयत्येव
माया ... ... ११५
यथा हिमांशुः खलु नैजसोऽयं ५३
यथा ह्ययं ज्योतिरिति श्रु-
तिस्त- ... ... १५३
यदनावृतचित्तदात्मनाऽद्दो २४
यदज्ञानतो यत्समुत्पद्यते तत् ६०
यद् द्वादशारं किल कालचक्रम् ८७
यदा नास्ति बोधो न बाधो
जडानाम् ... ... १९४
यद्ब्रह्म साक्षादपरोक्षमुक्त १६०
यथात्मनि स्वं सुखदुःखराग १३५
यस्मात्परं किमपि नास्ति
नमोऽस्तु तस्मै ... १
यस्मिन्नसद्दोऽध्यस्ततया वि-
भाति ... ... ७०
यस्य ज्ञेयं कार्यजातं समास्तम् १९७
यस्याऽत्यन्ताभाव एवाऽस्ति
यस्मिन् ... ... ८२
यस्याऽभासो व्यापकस्या-
ऽस्त्युपाधौ... ... १५२

यस्यामतं तस्य मतं वि-
ज्ञुद्धम् ... ... २०५
ये कारणात्कार्यमिदं विभिन्नम् ७९
ये ह्यसुपर्णेतिवचोबलेन १४४
येनाऽऽत्मनाऽत्र व्यवहार-
सिद्धिः ... ... १३२
ये पञ्च कोशाः श्रुतिषु
प्रसिद्धाः ... ... १२८
यो व्यष्ट्युपाधौ च समष्ट्यु-
पाधौ ... ... १२६
यः संशयात्मा स विनश्यतीति १२

र.

राज्ये स्थितोऽपि यतिराट्
न यथेष्टवर्ती ... ... २०१

ल.

लिङ्गोपाधेरात्मनो यः प्रवेशः ११०

व.

वपोपलं सम्पतितं प्रपश्यतां ६
वाक्ययोस्तद्वशया परमात्म-
वस्तु ... ... १७६
विलक्षणाद्ब्रह्मण एव कार्यं ६८
विशेषतस्त्वयं तत्त्वमस्यादि-
वाक्यात् ... ... २६
विहाय भक्तिं परमां पवित्रां २१२
वेदान्तवाक्यजनिता मति-
वृत्तिरेनं ... ... १७४
वेदान्तविज्ञानसुनिश्चितार्थाः १६
वैराग्यबोधाय हि कामिनां त १४५
व्यवहरति जीवो नामरूपक्रि-
याभिः ... ... ७३

श.

शरीरकर्मेन्द्रियचित्तयोगे ४१
शरीरकर्मेन्द्रियचित्तसाध्य ३८
शरीराद्यधिष्ठानपञ्चप्रकारैः १२३
शालिग्रामे धातुदेहेऽथ यन्त्रे १९०
शुभाऽशुभानां किल सूचकः
स्या- ... ... १७१
श्रुतिस्मृतिन्यायजनेषु सि-
द्धम् ... ... १४०
श्रेयान् द्रव्यमयतो ज्ञानयज्ञो २१३

ष.

षष्ठ्यर्थस्याऽसङ्गतेरत्यसङ्गे ९२

स.

सतोर्हि भेदः परिकल्पनीयो १५९
सत्ता स्फुरत्ता परमात्मनो या ५२
सत्यं सत्त्वगुणं वदन्ति भग-
वद्ब्रह्मेति केचिद् बुधाः १३८
सत्यं ज्ञानमनन्तमेवमनि-
दानन्दं परं केवलं ... ६५
सत्यानृतात्मं मिथुनं परस्परम् ७२
सदपि चित्तमदोऽसदिव
स्थितम् ... ... २८
समाधिकाले न जडं समीक्षते २७
समानमेतद्धि विमूढबुद्ध्योः ४४
समानसत्ताकतयाऽन्यथात्वात् ७८
सर्वज्ञनारायणनिर्मितत्वात् ८
सर्वं चैतद्बाधितं चेत्त्वदुक्त्या १६८
सवासनान्तःकरणस्य
साक्षी ... ... १९२
साङ्ख्यास्तु सत्त्वपुरुषान्य-
तया हि मोक्षम् ... १३९

सामग्रिका यावदिहास्ति भाने ३६
सुमेरुपृष्ठे सरितां तटे वा ४
सुषुप्तिकाले न तु तद्द्वितीयम् १६५
सुषुप्त्यवस्थासुखदुःखभोगो ४३
सोपाधिकं वा निरुपाधिकं वा ६४
संन्यासिनः कलहभैक्ष्यरताः
सदण्डाः ... ... २०४
सच्चिद्रूपं ब्रह्म चाऽऽत्मापि
संवित् ... ... १७९
स्त्रीपुंसतनूनां रुधिरादिपङ्के ९५
स्वतो हि तेषां किमपीह
कार्यम् ... ... १९८
स्वतःप्रकाशादिह धर्मिणो-
ऽन्यौ ... ... ४८
स्वतःप्रमाणत्वमिदं श्रुतीनाम् ९
स्वदृष्ट्या स्वयं निर्विशेषत्व-
हेतौ ... ... १९९
स्वप्ने तु सर्वेन्द्रियदिव्यदेह ४२
स्वस्याऽसत्त्वात्सर्वतो दुःख-
दा ये ... ... ९८
स्वोत्पत्तिमात्रे सकलं
विचार ... ... १०

ह.

हरेर्गुरोर्भक्तिरिदं द्वयं यत् ७

ज्ञ.

ज्ञानी त्वात्मैवेति कृष्णस्य
वाक्यात् ... ... २११
ज्ञानेन मोक्षः श्रुतिलोक
सिद्धो ... ... १४३
ज्ञाने समाप्तं सकलं हि कर्म १९६
ज्ञानं समस्तं खलु धर्मिमात्रे ४७
ज्ञानं हि धर्मिविषयं स
आत्मा ... ... ११६

---

* ॐ तत्सत् *

॥ श्रीकृष्णार्पणमस्तु ॥

—०—

स्वानुभवादर्शस्य

# शुद्धिपत्रम् ॥

| | शुद्धम् | पृष्ठाङ्काः | अशुद्धम् | पंक्ति |
|---|---|---|---|---|
| १ | ब्रह्म | २ | ब्रह्मे | २ |
| २ | व्यतिरेक | ३ | न्यतिरेक | ३ |
| ३ | चेतिश्रुतेः | ५ | चेतिश्नुतेः | ५ |
| ४ | मात्मनः | ५ | मात्मना | ५ |
| ५ | सुलभं | ६ | सुलं | ६ |
| ६ | सर्वहुतऋचः | ८ | सर्वतः ऋचः | ८ |
| ७ | तंह देवमात्म | ९ | तंहं देवात्म | ९ |
| ८ | निवृत्तिः | १० | निवृत्ति | १० |
| ९ | निवृत्तिः | १० | नवृत्ति | १० |
| १० | दृशोः | ११ | दृशो | ११ |
| ११ | तद्घटेत | १३ | तदघटेत | १३ |
| १२ | गूढात्मा | १५ | गूढात्मा | १५ |
| १३ | असंगोह्ययं | १५ | असंगोह्यहं | १५ |
| १४ | स्यस्वरूपापरि | १५ | स्यस्वत्रूपापरि | १५ |
| १५ | व्यतृणत् | १७ | व्यतृणवत् | १७ |
| १६ | स्वयंभूस्तस्मात् | १७ | स्वयंभुवस्तस्मात् | १७ |
| १७ | पराङ् | १७ | पराङः | १७ |
| १८ | युगपदेकदेशावस्थत्वेन | १८ | युगपद्देशावस्थत्वेन | १८ |
| १९ | अश्रद्धा | २० | श्रद्धा | २० |
| २० | धृतिर्धीरता | २० | धृतिधीरता | २० |
| २१ | अधीरता | २० | अधीरेता | २० |
| २२ | घेदे | २१ | वेद | २१ |
| २३ | हृदयपुंडरीक | २१ | हृदयपुंडरि | २१ |
| २४ | अथतत्त्वमसीति | २२ | अथत्तत्त्वमसीति | २२ |
| २५ | तदभिन्न | २३ | तद्भिन्न | २३ |
| २६ | यत्रत्वस्य | २५ | यस्पसर्वे | २५ |
| २७ | प्रमाणप्रमेयस्फुरणात्तस्प | २५ | स्फुरणातस्य | २५ |

| | | | | |
|---|---|---|---|---|
| २८ | सुसाधनतोहिनॄणांस्फुटम् | २६ | सुसाधनतोनृणाम् | २६ |
| २९ | तादृशं | २६ | त्तादृशं | २६ |
| ३० | निरतिशयं | २६ | निरितशयं | २६ |
| ३१ | तात्विकोऽन्यथा | २७ | अतत्विको | २७ |
| ३२ | अज्ञानं | २८ | अज्ञान | २८ |
| ३३ | निरुपाधिकमेव | २९ | निरुधिकमेव | २९ |
| ३४ | अशब्दमस्पर्शं | २९ | दृष्टमस्पर्शं | २९ |
| ३५ | पुण्यापुण्यहेतु | ३२ | पुण्यहेतु | ३२ |
| ३६ | भाष्यकारीयरीत्या | ३२ | भाष्यकारीया | ३२ |
| ३७ | चिन्मयान्तःकरण | ३४ | केनकं | ३४ |
| ३८ | तत्रकेनकं | ३४ | केनकं | ३४ |
| ३९ | सुषुप्ति | ३७ | सषुप्तिः | ३७ |
| ४० | सूक्ष्मस्य | ३८ | सूक्ष्मस्य | ३८ |
| ४१ | अन्वय | ३९ | न्द्वयय | ३९ |
| ४२ | धर्मिमात्रेऽभ्रान्तं | ३९ | धर्मिमात्रभ्रान्त | ३९ |
| ४३ | तर्हिनदृश्यते | ४१ | तर्हिनदृश्यते | ४१ |
| ४४ | तर्हि न प्रतिभाति | ४१ | तर्हि प्रतिभाति | ४१ |
| ४५ | ईश्वरानिष्ठे | ४४ | इश्वरानिष्ठे | ४४ |
| ४६ | ब्रह्माण्डान्तं | ४४ | ब्रह्माडान्तं | ४४ |
| ४७ | तज्ज्ञान | ४७ | तत्ज्ञान | ४७ |
| ४८ | यद्यद्द्धिष्ठान | ४७ | यद्धिष्ठान | ४७ |
| ४९ | यावन्नश्यते | ३७ | यावन्नाश्यते | ४७ |
| ५० | तच्चितोर्योगः | ४७ | तच्चितो योगः | ४७ |
| ५१ | ब्रह्मोति | ४९ | वह्मोति | ४९ |
| ५२ | सन्तिधर्माः | ५१ | सन्तोधर्माः | ५१ |
| ५३ | लक्षणवाक्यं | ५२ | लक्षणवाको | ५२ |
| ५४ | विचित्राश्चाहि | ५४ | विचित्राश्चैवहि | ५४ |
| ५५ | प्रकृतिश्च | ५६ | प्रकृतिः च | ५६ |
| ५६ | न केवलं | ५७ | न केवलः | ५७ |
| ५७ | तदेदं | ५७ | तदेदृं | ५७ |
| ५८ | तज्जगत्त्रय | ६१ | तज्जगत्रय | ६१ |
| ५९ | कार्य कारणव्याप्तमेव | ६२ | कार्य कारणव्याप्तमेव | ६२ |

| | | | |
|---|---|---|---|
| ६० चित्रिवर्त्तः | ६२ | चित्रिवर्तः | ६२ |
| ६१ प्रपञ्चसत्यत्व | ६२ | प्रपञ्चसत्व | ६२ |
| ६२ तत्कार्यजातं | ६३ | त्तत्कार्यजातं | ६३ |
| ६३ ब्रह्मसत्ताया अनावृतत्वात् | ६४ | आवृतत्वात् | ६४ |
| ६४ द्वैतहानम् | ६४ | द्वरहानम् | ६४ |
| ६५ उपेक्ष्य | ६४ | उपेक्षा | ६४ |
| ६६ मातर्कता | ६६ | तर्कता | ६६ |
| ६७ यंपृथिवीनयेद् | ६७ | अयं न पृथिवीं | ६७ |
| ६८ पपपयासाधुकर्म | ६७ | पयासाधुकर्म | ६७ |
| ६९ यद्वद्वादशार | ६८ | यद्वादशारं | ६८ |
| ७० कीलाः | ६९ | किलाः | ६९ |
| ७१ क्षत्रियवैश्यशूद्राः | ७१ | क्षत्रियवैश्यशूद्रः | ७१ |
| ७२ ममाभ्यासहानात् | ७१ | ममभ्यासहानात् | ७१ |
| ७३ दुष्टुर्भावात् | ७१ | दुष्टुर्भावा | ७१ |
| ७४ तस्याः स्थूले | ७२ | तस्या स्थूले | ७२ |
| ७५ परस्परं | ७४ | परस्परं | ७४ |
| ७६ कचिद्वादशा | ७८ | कचिद्वादशा | ७८ |
| ७७ इन्द्रियं चक्षुः | ७९ | इन्द्रियचक्षुः | ७९ |
| ७८ यन्मनसा | ८१ | यत्रमनसा | ८१ |
| ७९ कर्मणैति | ९१ | कर्मणैव | ८१ |
| ८० देहाभिमयन् | ८३ | देहाभियत् | ८३ |
| ८१ नचोभयं | ८४ | नचोभय | ८४ |
| ८२ स्वरूपम् | ८४ | स्वरूपम् | ८४ |
| ८३ पूर्वाचार्यैः | ८५ | पूर्वाचार्यैः | ८५ |
| ८४ महमित्यादि | ८५ | अहमित्यादि | ८५ |
| ८५ स्वभावपरामर्शो | ८६ | स्वाभाव | ८६ |
| ८६ बुद्धिधर्मो | ८६ | बुद्धिधर्मो | ८६ |
| ८७ देवता पोपयति | ८७ | देवताः पोपयति | ८७ |
| ८८ अवस्थाबुद्धेस्तदर्थं | ८७ | अवस्थाः बुद्धेः स्तदर्थं | ८७ |
| ८९ नापि सुषुप्तिर्वैलक्षण्यात् | ८७ | नापि सुषुप्ति | ८७ |
| ९० उपाधीनां | ८९ | सपाधीना | ८९ |
| ९१ प्रतिषेधाभावस्तुतः | ८९ | प्रतिषेधाद्वस्तुतः | ८९ |
| ९२ इति जायन्ते | ९५ | इति जायते | ९५ |

| | | | |
|---|---|---|---|
| ९३ गुरुप्रसादेन | ९५ | गुरु प्रसादन | ९५ |
| ९४ पदार्थ इति | १०४ | पदार्था इति | १०४ |
| ९५ तद्भगवान् | १०५ | तद्भगवत् | १०५ |
| ९६ भेदविशालधीः स्वयम् | ११० | भेदविशालधीः | ११० |
| ९७ देवः क्षेत्रेषु | १११ | देवक्षेत्रेषु | १११ |
| ९८ अनन्तं | १११ | अनतं | १११ |
| ९९ ब्रह्मतत्त्वं | ११२ | ब्रह्माऽतत्त्वं | ११२ |
| १०० यथास्यात् | ११३ | यथा | ११३ |
| १०१ निषेधात् | ११३ | निषेधा | ११३ |
| १०२ जीवेशावनयोः | ११३ | जीवेशानयो | ११३ |
| १०३ वरुण | ११३ | वरुणं | ११३ |
| १०४ इत्यादि | ११५ | इति | ११५ |
| १०५ नच भोग्यं | ११६ | नच योग्यं | ११६ |
| १०६ भोग्यादित्रयं | ११६ | भोग्यादित्रय | ११६ |
| १०७ तद्द्वितीयं | ११६ | तद्वितीयं | ११६ |
| १०८ प्रतिबिम्बात् | ११८ | प्रतिविवात् | ११८ |
| १०९ स्यात् | ११९ | स्या | ११९ |
| ११० उत्पन्ने | १२१ | उत्पन्ने | १२१ |
| १११ शोणगुण | १२२ | शोणागुण | १२२ |
| ११२ अविद्या | १२८ | अविद्याच | १२८ |
| ११३ पञ्चविधवृत्तीनां | १३१ | पचविधवृत्तानां | १३१ |
| ११४ अभ्युपेत्य | १३१ | अभ्युपेत्य | १३१ |
| ११५ असुर्याः | १३३ | असूर्याः | १३३ |
| ११६ श्रीबादरायणेनोक्तं | १३७ | श्रीबादरायणनोक्तं | १३७ |
| ११७ वासनाभिर्बंधः। | १३७ | वासनाभिर्बंधः | १३९ |
| ११८ पार्थ | १३९ | पार्थे | १३९ |
| ११९ सर्वोत्कृष्टत्वं | १४१ | सर्वोत्कृष्टत्वं | १४१ |
| १२० उत्तरपूर्वाघयोः | १४२ | उत्तरपूर्वाद्ययोः | १४२ |
| १२१ भरतर्षभ | १४६ | भरतर्षभ | १४६ |
| १२२ तस्मादेषां | १४६ | तस्माद्दोषा | १४६ |
| १२३ तन्मुमुक्षुभि | १४७ | तत्मुमुक्षुभि | १४७ |
| १२४ इति श्रीमन्नारायणाश्रम | १४७ | श्रीमन्नारायणाश्रम | १४७ |

( इति शुद्धिपत्रं समाप्तम् )

श्रीगणेशाय नमः ।

# स्वानुभवादर्शः ।

---

नमः ॐकारगम्याय नमः ॐकारसाक्षिणे ॥
नमः ॐकारवर्णाय कृष्णाय परमात्मने ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलकविशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकस्वेष्टदेवतानमस्कारात्मकं मङ्गलमाचरन् प्रकरणप्रतिपाद्यमर्थं सङ्क्षेपेण दर्शयति ।

यस्मात्परं किमपि नास्ति नमोऽस्तु तस्मै
सच्चित्सुखाय विभवे पुरुषोत्तमाय ॥
नो यत्र वागपि मनो न विबोधनाय
कृष्णाय पूर्णमहसे यदुनन्दनाय ॥ १ ॥

यस्मादिति ॥ तस्मै कृष्णाय नमोऽस्त्विति सम्बन्धः । श-रणागतानामविद्यातज्जन्मसुखदुःखात्मकसंसारकर्षणात् कृष्णस्तस्मै कायवाङ्मनोभिः प्रह्वीभावोऽस्त्वित्यर्थः । अत एव यदुनन्दनेतिविशेषणम् । यदून्क्रूरोद्धवप्रभृतीन् अर्जुनादीन् अन्यांश्च स्वात्मप्रदानेन नन्दयत्यानन्दयतीति यदुनन्दनः एतेन स्वस्यापि निरतिशयानन्दप्राप्त्यर्थं श्रीकृष्णाय प्रह्वीभावः कृत इति सूचितम् । अन्यैर्विशेषणैस्तस्य वास्तवस्वरूपं दर्शयति । तस्मै कस्मै यस्मान्निखिलदृश्याकारपरिणतमायाधिष्ठानात् सर्वावभा-

सकात् सद्रूपेण स्फुरणरूपेण च सर्वानुस्यूतात् स्वप्रकाशपरमानन्दचैतन्यघनात् परमार्थसत्यात् स्वप्नद्रष्टुःव, स्वाप्निकं मायाविनइव मायिकं, शुक्तिशकलावच्छिन्नचैतन्यात् तदज्ञानकल्पितरजतमिव च परं द्वितीयं किमपि वस्तु परमार्थसत्यं नाऽस्तीत्यर्थः। एतेन विजातीयभेदराहितत्वं दर्शितम्। सजातीयस्वगतभेदराहितत्वं विशेषणान्तरेण दर्शयति। पूर्णमहस इति। पूर्णमखण्डं यथोक्तभेदरहितं च तन्महश्च तत्स्वरूपमित्यर्थः। पुन स्तत्स्वरूपमाह। सचित्सुखाय। सच्चिदानन्दायेत्यर्थः। सदेवसौम्येदमग्रआसीद्विज्ञानमानन्दं ब्रह्मेति श्रुतेः। आनन्दादयः प्रधानस्येति न्यायात्। विभवे व्यापकाय। ब्रह्मैवेदममृतं पुरस्ताद पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण अध श्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वं वरिष्ठमिति श्रुतेः, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेश्च। व्यापकत्वं ब्रह्मणः तथा च देशपरिच्छेदरहितं ब्रह्मेत्यर्थः। इदमुपलक्षणं कालवस्तुपरिच्छेदयोः सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः। पुरुषोत्तमाय क्षराक्षरकार्यकारणाविलक्षणायेत्यर्थः। कार्यकारणता हित्वा पूर्णबोधो ऽवशिष्यत इति श्रुतेः।

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति स्मृतेः॥

तथा यत्र ब्रह्मणि विषये वाक् मनोऽपि विबोधनाय ज्ञापनाय न समर्थमिति शेषः। यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुतेः। वाङ्मनोभ्यामगोचरमित्यर्थः। ननु यतो वाचो निवर्तन्त इति न तावल्लौकिकं वाक्यं तस्याऽत्राऽप्रसक्तेः। तथा च वैदिकं वचो ब्रह्मणो विनिष्टचं सद् दृष्टैव स्यादिति चेन् मैवम्। यथा अशब्दमस्पर्शमरूपमित्यादि वाक्यं यथा वा ऽस्थूलमनण्वित्यादि वाक्यं शब्दत्वस्थूलत्वादिनिषेधेन ब्रह्मणि पर्यवस-

न्नम् अतो न वृथा निषेध्यवचनत्वेन निषेधवचनत्वेनाऽपि न ब्रह्म वाच्यं किन्तु वेर्लक्ष्यते, यथा विषं भुंक्ष्वेत्यत्र पदार्थासङ्गते स्तात्पर्येण शत्रुगृहभोजननिवृत्तिर्लक्ष्यते, तथा वाङ्मात्रेणाऽपि, ब्रह्म लक्ष्यते नतूच्यते । जात्यादिचतुर्विधशब्दप्रवृत्तिनिमित्ताभावात् । श्रुत्यन्तरमपि ।

यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।

यत्र मनसा न मनुते येनाऽहुर्मनो मतमिति ।

तथा च ब्रह्म वाचा न वाच्यं न मनसा मन्तव्यमिति । अभियुक्तैरप्युक्तम् ।

यो यः शब्दोयस्कृतार्थो निरूढ-

स्तस्मिन्नर्थे लक्षणा वृत्तिरस्य ।

ज्ञातव्या स्यात् पण्डितैरेवमेनत्

मत्यक् पूर्णं ब्रह्म वेदान्तवेद्यमिति ॥

ननु मनसैवेदमाप्तव्यमित्यवधारणस्य का गतिरिति चेच्छृणु । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिपरमवधारणमिति । ननु मङ्गलस्य ग्रन्थसमाप्तिफलमित्युक्तं तन्न । तथाहि कृतेऽपि मङ्गले आस्तिकग्रन्थादौ समाप्त्यदर्शनात् । अकृतेऽपि मङ्गले नास्तिकग्रन्थादौ समाप्तिदर्शनात् । तस्मादन्वयव्यतिरेकाभ्यां समाप्तेर्व्यभिचारात्, कृतस्य कर्मणः किंचित् फलमवश्यं वाच्यम्, तच्च विघ्नध्वंसरूपमेवाऽस्त्विति चेन् मैवम् । कृतेऽपि मङ्गले यत्र समाप्त्यभावस्तत्र विघ्नबाहुल्यं बलवत्तरविघ्नो वा बोध्यः । तन्निवृत्तिस्तु मङ्गलप्राचुर्याद् बलवत्तरमङ्गलाचरणाद् वा भवेत् । अकृतेऽपि मङ्गले समाप्तौ जन्मान्तरीयमङ्गलं तत्र कल्प्यते संसारस्याऽनादित्वात्, तस्मान्नाऽन्वयव्यतिरेकव्यभिचारः । मङ्गलस्य

शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकत्वं तस्मिन् विघ्नविनाशिनी सभाप्त्यनुकूला चेति शक्तिद्वयमस्ति । तथा च विघ्नध्वंसएव फलं नेति, यथा विविदिषन्तियज्ञेनेत्यत्र चित्तशुद्धिविविदिषोत्पत्तिरूपद्वयजननसामर्थ्यमाश्रमकर्मणां तथाऽत्राऽप्यस्तु बाधकाभावात् । एवमप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्त्यादिनिवृत्तिरूपाणि शिष्टाचारपरिपालनं चेत्यादि मङ्गलाचरणस्य फलानि ज्ञेयानि । न च कृष्णो नाम धर्मराजवत् कश्चन महापुरुषो भूचरत्वादथवा इन्द्रानुजत्वादज्ञातदेवोऽस्तु कदाचिद् देवलोकस्थत्वात् तस्य कथं परब्रह्मतोच्यते इति वाच्यं । महर्षिभिः श्रुतिस्मृतिपर्यालोचनया ब्रह्मत्वस्य निरुक्तत्वात् । तथा च वचनम् ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इति ॥

वस्तुतस्तु

न देवः पुण्डरीकाक्षो न च देव स्त्रिलोचनः
अकृत्रिममनाद्यन्तं दैवतं परमुच्यते ।

इतिस्मरणात् । अकृत्रिमं कृष्णदैवतं कृष्णशब्दलक्ष्यं ब्रह्मैवेति ॥ १ ॥

अथ द्विविधो ह्यधिकारी कश्चनाऽनेकजन्मसुकृतविपाकात्तीव्रतरप्रज्ञोऽन्यो मन्दप्रज्ञः । मादृशस्तु मन्दप्रज्ञस्तथाहेत्वभावात् । तत्र तीव्रप्रज्ञस्य श्लोकेन श्लोकार्द्धेन वा ब्रह्मसाक्षात्कारो भवति। तथा चोक्तम् ।

आत्मानं विन्दते यस्तु सर्वभूतगुहाशयम् ।
श्लोकेन वा तदर्द्धेन क्षीणं तस्य प्रयोजनमिति ॥

मितप्रज्ञस्य तु द्वितीयस्याऽसम्भावनाविपरीतभावनयोरुद्-यान्न झटिति ब्रह्मसाक्षात्कारो भवति तादृशं प्रति गुरुशास्त्रवि-

चारो ऽवश्यमपेक्षित इति मनसि निधायाऽऽह ।

अतिदूरतरं निजस्वरूपं
गुरुशास्त्रान्न विचार्यते यदि ॥
निकटं गुरुशास्त्रबोधनात्
प्रकटं स्यात्स्वतनौ स्वयं हि तत् ॥ २ ॥

अतिदूरतरमिति निकटं स्वहृदयान्तरवर्त्ति निजस्वरूपं स्वस्य ब्रह्मस्वरूपत्वं यदि गुरुशास्त्रान्न विचार्यते तर्ह्यतिदूरतरं अतिदूरतरादप्यतिदूरतरम् । दूरात् सुदूरे तदिहाऽन्तिके चेतिश्रुतेः, दुरस्थश्चान्तिके च तदिति स्मृतेश्च । व्यतिरेकमुक्त्वाऽन्वयमाह । गुरुशास्त्रबोधनात् प्रतिबन्धकाविद्यानिवृत्तेः स्वतनौ अस्मिन्नेव देहे स्वयं प्रकटमाविर्भवेत् स्वप्रकाशत्वादित्यर्थः । ऐहिकमप्रस्तुतप्रतिबन्धेतद्दर्शनादिति न्यायात् ॥ २ ॥

उक्तमर्थं दृष्टान्तेन द्रढयति ।

न हि निर्मथनं विनेन्धनाग्निः
परिलभ्यो निकटो ऽपि सन्नपि ॥
गुरुशास्त्रविचारणं विना
न हि लभ्यं निजरूपमात्मनः ॥ ३ ॥

नहीति । आत्मनः प्रतीचो निजरूपं ब्रह्मत्वं तदित्यर्थः । दृष्टान्तेनाऽयमर्थः श्रुत्या सूचितः । अथाऽधिविद्य आचार्यः पूर्वरूपं अन्तेवास्युत्तररूपं विद्यासन्धिः प्रवचनं सन्धानमिति शेषं स्पष्टम् ॥ ३ ॥

ननु विचारस्य किं प्रयोजनं चक्षुरादिना तत्प्राप्तिः स्या-

दित्यत आह ।

सुमेरुपृष्ठे सरितां तटे वा
किं मूर्त्तिमद्ब्रह्म विलोकनीयम् ॥
त्रिधा परिच्छेदविहीनमेकं
विना विचारं सुलभं न तत्स्यात् ॥ ४ ॥

सुमेरुपृष्ठ इति । यदि मूर्तिमद्ब्रह्म स्यात्तर्हि महता प्रयत्नेन मेरुपृष्ठस्थं ब्रह्म चक्षुरादिना विलोकनीयं स्यात् । न चैवं तथा । दिव्यो ह्यमूर्त्तः पुरुष इति श्रुतेः । किमित्याक्षेपे त्रिधापरिच्छेदशून्यं एकं सजातीयविजातीयस्वगतभेदरहितम् । विचारं विना न सुलं सुखेन लब्धुं न शक्यमित्यर्थः । अतोऽवश्यं विचारः कर्त्तव्य इति भावः ॥ ४ ॥

यद्यप्यस्य वेदान्तप्रकरणत्वात्तदीयमेवाऽनुबन्धचतुष्टयं तथाऽपि मन्दप्रज्ञस्याऽप्यधिकारिणो यथोक्ताधिकारं विना विचारोऽपि सुदूर एव किमु निजस्वरूपं दूरमिति, तदर्थं यथोक्ताधिकारिणं दर्शयति ॥

न दोषदृष्टिर्न विरागलेशो
दुःखात्मके कर्मणि तत्फले च ॥
मुमुक्षुता नाऽपि शमादिषट्कं
तेषां विचारोऽपि सुदूर एव ॥ ५ ॥

नेति । रजः कार्यत्वात् दुःखात्मकत्वं कर्मणः दुःखानुविद्धत्वात् तत्फले च । यथा स्वर्गकामो यजेतेत्यत्र स्वर्गकामोऽधिकारी तस्यार्थी समर्थो विद्वानिति यथाऽधिकारिविशेषणानि तथात्र

मुमुक्षोरधिकारिणः । नित्यानित्यविवेक इहामुत्रफलभोगविरागः शमादिषट्कसंपत्तिरित्यादियुक्तस्वरूपाण्यधिकारिविशेषणानि ज्ञेयानि।एतादृशविशेषणविशिष्टस्य मंदप्रज्ञस्यापि मुमुक्षुतायां सत्यां विचारे प्रवृत्तिरन्यथा दूरेत्यर्थः । विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात् । सम्बन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावलक्षणः ।प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिस्स्वस्वरूपानन्दावाप्तिश्च।तरति शोकमात्मविद्ब्रह्म वेद ब्रह्मैव भवतीत्यादि श्रुतेरिति ॥ ५ ॥

विषयसौन्दर्याद्विचारं परिकुर्वतामपि तत्प्राप्तिरनेकजन्मार्जितपुण्यसंचयं विना दुष्प्रापेत्याह ।

वर्षोपलं संपतितं प्रपश्यतां
प्राप्तिस्तु तस्याऽस्ति नरस्य कस्यचित् ॥
तथा विचारं परिकुर्वतां नृणां
प्राप्तिः स्वरूपस्य वृषेण कस्यचित् ॥ ६ ॥

वर्षोपलमिति । वृषेण धर्मेणेत्यर्थः । उक्तं च भगवता ।
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वत इति ॥ ६ ॥
वृषेण स्वरूपप्राप्तिरित्युक्तं तत्राऽसाधारणं धर्मं दर्शयति ।

हरेर्गुरोर्भक्तिरिदं द्वयं यत्
सुसाधनं यः प्रकरोति नित्यं ॥
ऐक्येन तस्यैव करस्थितास्ति
मुक्तिः प्रसादेन हरेर्गुरोश्च ॥ ७ ॥

हरेरिति। नित्यं नियमेन। अव्यभिचारेणेत्यर्थः। ऐक्येन गुरुदेवतयोरैक्यभावनयेत्यर्थः। एवं भजतामुभयोः प्रसादेन मुक्तिः सुलभेत्यर्थः। तथा च श्रुतिः।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति॥
भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्वतः।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्तिते॥

इत्यादिस्मृतिभ्यः। भक्त्यैकयेशं गुरुदेवतात्मेति श्रीभागवतोक्तेश्च॥ ७॥

ना ऽवेदविन्मनुते तं बृहंतमिति वेदेनैवोक्तं तत्र स वेदोऽपौरुषेयः स्वतः प्रमाणं चेदं दर्शयति।

सर्वज्ञनारायणनिर्मितत्वा-
दपौरुषेयः सकलो ऽपि वेदः॥
स्वतः प्रमाणं निरपेक्षितत्वा-
न्मानान्तरस्येति सुनिश्चितो ऽर्थः॥ ८॥

सर्वज्ञेति। यः सर्वज्ञः सर्वविदिति श्रुतेः। भगवतः सर्वज्ञत्वं तथा, तस्माद्यज्ञात् सर्वत ऋचः सामानि जज्ञिर इति श्रुतेः, अस्य महतो भूतस्य निश्वसितमेवैतदृग्वेद इत्यादि श्रुतेः, यस्य निश्वसितं वेदा इति स्मृतेः। निश्वसितन्यायेन नारायणनिर्मितत्वं वेदस्य। अत एवापौरुषेयत्वं चतुर्मुखपुरुषाद्यनिर्मितत्वमित्यर्थः। चतुर्मुखोऽपि नारायणादेव वेदं प्राप्तवानित्याह श्रुतिः।

यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इति ।

वेदयत्यधिकारिणः कर्मब्रह्मणी इति वेदः स्वतः, प्रमाणं तच्च स्वप्रकाशनीयार्थं प्रमाणान्तरानपेक्षम्। यथा भिषजा हरितकीं भक्षयेदित्युक्ते किमत्र प्रमाणमित्याकांक्षायामायुर्वेदवचनप्रदर्शनेन श्रोता प्रमाणान्तरनिरपेक्ष एव हरितकीं भक्षयति ततश्च रोगनिवृत्तिर्भवतीति सुनिश्चितोऽर्थः स्वानुभवसिद्ध इत्यर्थः। तथा स्वर्गकामो यजेतेति वाक्यश्रवणानन्तरं स्वर्गार्थी प्रमाणान्तरनिरपेक्षतयैव यागे प्रवर्तते इत्यनुभवसिद्धं सर्वलोकप्रसिद्धं च ॥ ८ ॥

ननु स्वतःप्रमाणाद्वेदादेव फलसिद्धौ भवन्त्यां किं विचारस्य प्रयोजनमित्यत आह ।

स्वतः प्रमाणत्वमिदं श्रुतीनाम्
विचारसापेक्षतया प्रणश्येत ॥
अतो विचारस्य फलं प्रकल्प्यम्
संदेहविभ्रान्तिविनाशमात्रम् ॥ ९ ॥

स्वतइति । यद्यपि विचारनिरपेक्षतयैव स्वतःप्रमाणवेदाद्ब्रह्मात्मबुद्धिः फलं तथापि प्रतिबन्धके सति ततो न फलसिद्धिः अतः प्रतिबन्धकनिवृत्त्यर्थं विचारो ऽपेक्षितः। तथा च न वेदस्य स्वतःप्रामाण्यभङ्ग इत्यर्थः । विचारो नाम तर्को मननात्मकः तेन प्रमेयगता ऽसम्भावना निवर्तते । आत्मतत्त्वे सहस्रधा श्रुतेऽपि देहेन्द्रियव्यतिरिक्त आत्मा नेति सम्भाव्यते इतीयमसम्भावना तन्निवृत्तौ सत्यां ततो निदिध्यासनेन प्रमेयगताविपरीतभावना निवर्त्तते। अतो विचारस्य मुख्यं फलं प्रमेयगतासंभा

वनानिवृत्तिपरम्परया प्रमेयगतविपरीतभावनानिवृत्तिरपि । अत उक्तं संदेहविभ्रांतिविनाशमात्रमिति ॥ ९ ॥

पूर्वोक्तमेव विवृणोति ।

स्वोत्पत्तिमात्रे सकलं विचार-
मपेक्षते चोपनिषद्भवा मतिः ॥
सोत्पत्तितो मूलतमो निहन्ति
दीपो यथाऽन्यं सहकारिणं विना ॥ १० ॥

स्वोत्पत्तिमात्र इति। उपनिषद्भवा मतिरहं ब्रह्मास्मीत्यपरोक्षप्रमा, सा स्वोत्पत्तिमात्रे मतिबन्धकनिवर्तकं विचारं चकाराभिदिध्यासनमप्यपेक्षते। सोत्पत्तितो मूलतमः मूलाज्ञानं ब्रह्मावरकं निहन्ति। यथा दीपः स्वोत्पत्तिमात्रे निर्वातत्वाद्यपेक्षते ततश्चोत्पन्नः सहकारिणं विनैव तमोऽन्धकारं निहन्ति तद्वदित्यर्थः। निहन्तीत्यत्रोपसर्गेण विरम्य व्यापारता नाऽस्तीति बोधितम्। आदौ विद्योत्पद्यते पश्चादज्ञानं निवर्तते इति। तस्मादेवं नाऽस्ति या विद्योत्पत्तिः सैवाज्ञाननिवृत्तिरिति स्वसाक्षिकमिति भावः ॥ १० ॥

एवं मननात्मकेन विचारेण प्रमेयगताऽसम्भावना प्रतिबन्धकीभूता निवर्तत इत्युक्तम्। संप्रति वादिविमतिपत्तिजां पदार्थविषयणीमसम्भावना निवर्तयन्पदार्थद्वयगतामसम्भावनां दर्शयति—

पदार्थद्वयं दृक्च दृश्यं ततोऽन्यत
पदार्थान्तरं नास्ति वेदान्तशास्त्रे ॥
दृशः किं स्वरूपं च दृश्यस्य किंवे—
त्सदोऽत्र द्वयं संविचार्यं मुमुक्षोः ॥ ११ ॥

पदार्थद्वयमिति । येन सर्वं विजानातीति श्रुतेः दृग्दृश्यातिरिक्तं पदार्थान्तरं नास्ति। अन्यवादिकल्पितानां तत्तत्पदार्थानामनयोरन्तर्भावो बोद्धव्यः। तथा हि वैशेषिकसप्तपदार्थानां षोडशपदार्थेष्वन्तर्भावस्तेषां च वेदान्तकल्पिते दृश्यपदार्थेऽन्तर्भावः।"

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति ॥

पञ्चविंशतिपदार्थमध्ये मूलप्रकृत्यादिचतुर्विंशतिपदार्थानां दृश्येऽन्तर्भावः। सच्चिद्रूपः पुरुषः प्रत्यगात्मन्यन्तर्भूत इति पदार्थद्वय एव अन्यवादिकल्पितानामन्तर्भावो ज्ञेय इति । तत्र दृशो द्रष्टुः किं स्वरूपं सा दृक् किं सद्रूपा सच्चिद्रूपा वा सच्चिदानन्दरूपा वा पुनश्च सा जीवाद्भिन्ना अभिन्ना वा सगुणा निर्गुणा वेत्याद्यनेकसंशयनिरासपूर्वकं मुमुक्षुणा स्वरूपं विचार्यमित्यर्थः। तथा दृश्यं किं स्वरूपं सत्यमसत्यं वेति संशयनिरासोऽपि मुमुक्षोरपेक्षित एवेत्यर्थः ॥ ११ ॥

उक्तवैपरीत्यबाधपूर्वकं विचारकर्तव्यतामाह ।

यः संशयात्मा स विनश्यतीति
श्रीकृष्णवाक्यान्निजसंशयादेः ॥
नाशाय धीस्वास्थ्यफलाय चैव
स्वयं हि सम्यक् क्रियते विचारः ॥ १२ ॥

यइति । संशयात्मा विनश्यति सर्वपुरुषार्थभ्रष्टो भवतीति श्रीकृष्णवचनादपुरुषार्थत्वनिरासार्थं विचारेण निश्चयात्मकज्ञाने सति संशयनाशात् धीस्वास्थ्यफलमहं ब्रह्मास्मीति ज्ञानं भवतीत्यर्थः । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या-

सितव्य इति श्रुतावात्मदर्शनमनूद्य तत्साधनत्वेन श्रवणादित्रयमुपदिष्टम्।तत्र श्रवणस्य गुर्वधीनत्वात् तत्परायत्तत्वम्। मनननिदिध्यासने तु स्वायत्ते भवतो ऽत उक्तं स्वयंहीति। सम्यक् श्रुत्यविरोधितयेत्यर्थः। श्रुतिमतः तर्को ऽनुसन्धीयतामित्याचार्योक्तेः अनुपदमेव वक्ष्यमाणत्वादेष इत्युक्तम् ॥ १२ ॥

नन्वदोऽत्र द्वयं संविचार्यं मुमुक्षोरित्युक्तं तत्र मुमुक्षा नाम मोक्षकामना सैव न सम्भवति। तथाहि प्रमाणादात्मस्वरूपा मुक्तिर्यदि न ज्ञाता तत्र कामनैव न सम्भवति अज्ञाते कामनाविरहात्, प्रमाणेन ज्ञाता चेत् सुतरां सा न सम्भवति सिद्धे इच्छाविरहादित्यत आह।

निरतिशयसुखं यत्प्रत्यगात्मस्वरूपं
निरतिशयसुखं यन्मोक्षरूपं तदेव ॥
निरतिशयसुखार्थं सर्वलोकस्य वाञ्छा
भवति च मनसः सा मानमुज्झित्य सर्वम् ॥ १३॥

निरतिशयसुखमिति। न इच्छा कस्यापि प्रमाणादुत्पद्यते तस्या मनोधर्मत्वेन स्वत एवोत्पत्तेः। यथोक्तम् प्रमाणादज्ञाते इच्छैव न, ज्ञाते तु सुतरां न सिद्धे इच्छाविरहादिति। तत्रोच्यते। आत्मनो नित्यापरोक्षत्वेन सिद्धत्वेऽपि निरतिशयसुखत्वेनाऽसिद्धत्वात् कामना सम्भवत्येव। तदुक्तं वार्त्तिके।

न युक्तं कामना मुक्तौ पुंसां नास्तीति भाषितुम्।
देशकालानवच्छिन्नसुखार्थित्वदर्शनादिति ॥ १३ ॥

पूर्वमीमांसकमते सर्ववेदस्य क्रियापरत्वे तं त्वौपनिषदं पुरुषं पृच्छामीति बाधः प्राप्नोति तन्निरासार्थं तत्प्रक्रिययैव सर्व-

वेदस्य क्रियापरत्वं दूषयति ।

आम्नायसूत्रे सकलं हि वेदं
क्रियापरं जैमिनिराह यत्नात् ॥
न तन्मतं चारु निषेधवाक्ये
क्रियापरत्वं न हि तद्घटेत ॥ १४ ॥

आम्नायेति । आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तद्भूतानां क्रियात्वेन समन्वय इति सूत्रेणाऽऽम्नायस्य क्रियापरत्वं सूचितं तन्मतं न चारु न युक्तम् । कुतः । तन्मते विधिमन्त्रनामधेयनिषेधार्थवादैः पञ्चात्मको वेद इति तत्र क्रिया निवृत्त्यर्थे निषेधवाक्ये क्रियापरत्वं न घटते तयोः स्थितिगतिवत् परस्परं विरोधात् । तथा च सर्वस्य वेदस्य क्रियापरत्वं न युक्तमित्यर्थः ॥ १४ ॥

आम्नायस्य क्रियापरत्वे दूषणान्तरमप्याह ।

आत्मस्वरूपा हि विमुक्तिरुक्ताऽ
विद्यानिवृत्त्या ह्युपलक्षिता या ॥
ज्ञानेन लभ्या न च कर्मसाध्या
ज्ञानं न लभ्यं क्रियया कदापि ॥ १५ ॥

आत्मस्वरूपेति । स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन स्वरूपेणाऽभिनिष्पद्यते स उत्तमः पुरुष इति श्रुत्याऽऽत्मस्वरूपा मुक्तिरुक्ता । सा च विस्मृतकण्ठचामीकरन्यायेनाऽज्ञानव्यवहितत्वाद् वेदान्तविज्ञानेनाऽविद्यानिवृत्त्युपलक्षिता न कर्मसाध्या न क्रियासाध्या सिद्धत्वात् नाऽन्यो वेद-

स्य क्रियापरत्वमित्यर्थः। ननु माऽस्तु मुक्तिः क्रियासाध्या ज्ञानं तु क्रियासाध्यं स्यादत आह। ज्ञानमिति । ज्ञानमपि कर्तुमकर्तुमन्यथाकर्तुमशक्यत्वान्न क्रियासाध्यं तस्य प्रमाणप्रमेयाधीनत्वादित्यर्थः ॥ १५ ॥

सर्ववेदस्य क्रियापरत्वे वेदान्तविज्ञानसुनिश्चितार्था इतिश्रुतिविरोधं दर्शयति ।

वेदान्तविज्ञानसुनिश्चितार्था
इतिश्रुतिर्वष्टि यथार्थभानात् ॥
ब्रह्मैव लोके समवाप्नुवन्ति
क्रियापरत्वं न ततोऽस्ति वेदे ॥ १६ ॥

वेदान्तेति । वेदानां ऋगादीनामन्ताः प्रान्ताः शिरोभागाः प्रज्ञानं ब्रह्मेत्यादयस्तेषां विज्ञानं पदार्थशोधनपूर्वकं जीवब्रह्मैक्यरूपतदर्थनिश्चयः तेन सुष्ठु सन्देहादिरहितं यथा स्यात् तथा निश्चितोऽहं ब्रह्मास्मीतिरूपोऽर्थः परमार्थो यस्सः लोक्यते प्रकाश्यते जडजातं येनेति लोकस्तस्याऽन्यप्रकाशकत्वासम्भवात् स्वप्रकाशमित्यर्थः। शेषं स्पष्टम् ॥ १६ ॥

वेदव्यासस्तु वेदान्ताचार्यो वेदस्य काण्डत्रयात्मकत्वं दर्शयं स्तस्य विनियोगं दर्शयतीत्याह ।

चेतःशुद्धौ चेतसः स्थैर्यकार्ये
ज्ञानोत्पत्तौ चारु काण्डत्रयं यत् ॥
आम्नायस्याऽनुक्रमाद्वेदवेत्ता
वेद व्यासस्त्वेकवाक्यत्वसिध्यै ॥ १७ ॥

चेत इति। एवं विनियोगे श्रुतयः प्रमाणम्। तत्र तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसा नाशकेनेति श्रुतिः। कर्मकाण्डस्य चित्तशुद्धिद्वारा विविदिषायां विनियोगमाह।

एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।

दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति ।

श्रुतिरुपासनाकाण्डस्य चेतःस्थैर्ये विनियोगं दर्शयति । ततो ज्ञानकाण्डस्थवाक्यानि महावाक्यानि अध्यारोपापवादद्वारा ज्ञानोत्पत्तौ विनियोगं दर्शयन्तीति यथायथमूह्यम् ॥ १७ ॥

एवं च वेदस्य स्वतःप्रामाण्यं प्रसाध्य तस्य च साक्षात्परम्परया च ब्रह्मपरतां संप्रदर्श्य तद्बलेन दृशः किं स्वरूपमेवमादि विचार आरभ्यते ॥

असङ्गस्य बन्धो न सम्भावनीयो
न मोक्षोऽपि मोक्षस्य तत्पूर्वकत्वात् ॥
अविद्या हि बन्धो निवृत्तिश्च तस्याः
स मोक्षो ऽत्र सर्वस्तदर्थः प्रयत्नः ॥ १८ ॥

असङ्गस्येति । असङ्गो ह्ययं पुरुष इति श्रुतेरनुभूत्या चाऽसङ्गस्याऽऽदौ बंध एव न संभवति मोक्षोऽपि न सम्भवति। कुतः मोक्षस्य तत्पूर्वकत्वाद् बन्धाभावे मोक्षो ऽप्यसङ्गस्य न संभवतीत्यर्थः। अत एव श्रुतिः ।

न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्तिरित्येषा परमार्थतेति ॥

तर्हि को बंधः को वा मोक्ष इत्याकाङ्क्षायामाह । अविद्या स्वस्वरूपापरिज्ञानं निश्चयेन बंधस्तस्या निवृत्तिर्नाशो मोक्षस्तद-

र्थो महापुरुषार्थत्वात्सतां सर्वोऽपि प्रयत्नः। अभियुक्तैरप्युक्तम्।
स्वात्माज्ञानं कारणं बंधनस्य स्वात्मज्ञानात्तन्निवृत्तिश्च मुक्ति-
रिति ॥ १८ ॥
अविद्यारूपस्य बंधस्या ऽनादित्वात्तत्रोपायचिन्तैव नास्ति,
अविद्यानिवृत्तिरूपमोक्षस्तूपायसाध्यो ऽत स्तत्रोपायं दर्शयति।

अविद्यानिवृत्तिः प्रमाणेन साध्या
प्रमाणं च वेदान्तवाक्यानि नाऽन्यत् ॥
अविद्यानिवृत्तौ स्वयं ज्योतिरात्मा
स्वतः सिद्ध आविर्भवेत्साधकानाम् ॥ १९ ॥

अविद्येति। अनाद्यविद्यायाः निवृत्तिर्नाशः प्रमाणेन प्रमा-
णजन्यज्ञानेनेत्यर्थः। ज्ञानाज्ञानयोर्विरोधादित्यर्थः। तदुक्तम्।
अविद्याया अविद्यात्वमिदमेव हि लक्षणम्।
मानयोगासहिष्णुत्वमन्यथा वस्तु सा भवेदिति।
किं तत्र प्रमाणं येना ऽविद्यानिवृत्तिस्तत्राह। प्रमाणं च
वेदान्तवाक्यानि प्रज्ञानं ब्रह्म तत्व मसीत्यादीनि तत्वाऽऽवेद-
कानि।
लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता।
विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ॥
इतिवचनात्प्रमाणं वेदा इति नपुंसकत्वसंख्याभेदेऽपि विशेषणवि-
शेष्यतोक्ता। ननु प्रत्यक्षादीनामन्येषां प्रमाणानां सत्वात्प्रमाणं च
वेदान्तवाक्यानीति कथमित्यत आह। नान्यदिति। अन्यानि प्रमा-
णानि व्यावहारिकाणि प्रत्यक्षादीन्यविद्यानिवृत्तौ न समर्थानि
तेषां पराग्विषयत्वेन तत्वावेदकत्वाभावादित्यर्थः। तदुक्तं। सर्वं

पराग्विषयमेव हि मानजातं वेदावसानवचनानि च वर्जयित्वेति। किंच जडार्थविषयं मानं स्वप्रमेयस्य कर्मत्वेन बोधकम्। महावाक्यं तु स्वप्रमेयस्य विनैव कर्मत्वमवबोधयितुं समर्थमतो वेदान्तवाक्यान्येवाऽविद्यानिवृत्तौ प्रमाणं नान्यदित्यर्थः। तथा च श्रुतिः "पराञ्चि खानि व्यतृणत् स्वयम्भुस्तस्मात् पराङः पश्यति नान्तरात्मन्निति। पराङ्पराभूतान्यनात्मभूतान् शब्दादीन् पश्यति उपलभते उपलब्धानान्तरात्मन्नान्तरात्मानमिति श्रुत्यर्थः। एतेन वेदान्ता अद्वितीयब्रह्मणि प्रमाणं न वेति प्रमाणगतासम्भावनानिवृत्तिरपि बोद्धव्या। तथा च प्रमाणजन्यज्ञानेनाऽज्ञाननिवृत्तौ मेघापायेऽशुमानिव स्वयञ्ज्योतिः स्वप्रकाश आत्मा साधकानामधिकारिणामाविर्भवेत्। स्वतःसिद्ध इत्यनेन स्वर्गादिवन्नाऽऽत्मस्वरूपा मुक्तिर्जन्येति दर्शितम्। विमुक्तश्च विमुच्यत इतिश्रुतेः॥ १९॥

सर्वप्रक्रियाग्रन्थेष्वन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणमित्युक्तम्। अत्र तु वेदान्तवाक्यानीत्युक्तम्। तथाच प्रमाणविषयविरोध आभासते तदर्थं मुख्यौपचारिकभेदात् प्रमाणं द्विविधं, मुख्यमौपचारिकं च प्रमाणमिति विविच्य दर्शयति।

धीवृत्त्यवच्छिन्नचितिः प्रमाणम्

तत्साधनत्वादितरत्प्रमाणम्॥

तत्रोपचारात् खलु मानशब्दो

मुख्यं प्रमाणं तु यथोक्तमेव॥ २०॥

धीति। अत्रेयं प्रक्रिया। एकमेव चैतन्यमुपाधिभेदात् सप्तविधम्। शुद्धचैतन्यम्, ईश्वरचैतन्यं, जीवचैतन्यं, प्रमातृचैतन्यं, प्रमाणचैतन्यं, विषयचैतन्यं, फलचैतन्यं चेति। तत्रसर्वोपाधिवि-

निर्मुक्तं शुद्धचैतन्यम्, मायोपहितचैतन्यमीश्वरचैतन्यम्, अविद्योपहितचैतन्यं जीवचैतन्यम्, जीवेशावाभासेन करोति माया चाऽविद्या च स्वयमेव भवतीति तापिनीयश्रुतेः।अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्, विषयावच्छिन्नं चैतन्यं विषयचैतन्यम्, अंतःकरणवृत्त्यवच्छिन्नं चैतन्यं विषयचैतन्याभिन्नं तत्फलचैतन्यमित्युच्यते। तत्र वृत्तिविषययोर्युगपदेकदेशावस्थानेन तदुपहितयोश्चैतन्ययोरप्यभेदो भवति। तथाहि। यथा तडागोदकं छिद्रान्निर्गत्य कुल्याद्वारेण केदारं प्रविश्य चतुष्कोणाद्याकारेण परिणमते तथेंद्रियविषयसंयोगानंतरमंतःकरणं चक्षुरादिद्वारा विषयदेशं गत्वा तेन विषयेण संयुज्यते, पश्चात्तत्तदाकारेण परिणमते। सोऽयंपरिणामो वृत्तिस्तस्यां वृत्तौ विषयचैतन्यं प्रतिफलति तदा वृत्तिविषययोर्युगपद्देशावस्थत्वेन तदुपहितचैतन्यभेदस्याऽप्रयोजकत्वात्। प्रमाणचैतन्यं विषयचैतन्याभिन्नं भवति सेयं प्रत्यक्षप्रमा। तत्र वृत्त्या विषयो नाऽस्तीत्यसत्वापादकमावरणं निवर्त्तते, चैतन्येन तु विषयो नाऽऽभातीत्यभानापादकमावरणं निवर्त्तते। तत्र प्रमया च सावरणमज्ञानं मौढ्यापादकं निवर्त्तते ततो विषयः स्फुरति साक्षिणा। अन्तःकरणोपहितं चैतन्यं साक्षीति प्रक्रिया व्यवहारे। न चेयं प्रक्रिया स्वकपोलकल्पितेतिवाच्यम्।श्रुत्युक्तत्वात्। तथाच श्रुतिः। यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यादि। तत्रा ऽविद्यादशायामखण्डचैतन्यमुपाधिना द्वैतमिव भवति द्वितीयमिव भवति तदा इतरः प्रमाता इतरं विषयं पश्यति जानातिपश्यतीति क्रियापदं क्रिया चा ऽन्तःकरणवृत्तिरूपा अन्तःकरणस्य परिणामित्वात्। तथा चोक्तमाचार्यैः।

आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरितिद्वयम्।

संयोज्य चाऽविवेकेन जानामीतिप्रवर्त्तते ॥
आत्मनस्तु क्रिया नाऽस्ति बुद्धे र्बोधो न जातु चित् ।
जीवःस्वरूपमज्ञाय ज्ञाता द्रष्टेति मुह्यतीति ॥

तया चाऽन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं मुख्यं प्रमाणम् । या वृत्तिरुत्पद्यते सा चैतन्याभासखचितैवोत्पद्यते । यथा घटादिरुत्पद्यते यः स आकाशव्याप्त एवोत्पद्यते तथा वृत्तिरपि । अत उक्तं धीवृत्त्यवच्छिन्नं चैतन्यमिति । तथा च धीवृत्त्यवच्छिन्नचैतन्यं मुख्यं प्रमाणं, तत्साधनत्वात् वृत्तिकरणत्वादितरचक्षुरादि प्रमाणमौपचारिकमित्यर्थः । तथा च न पूर्वोक्तो विरोधाभासः। अज्ञातज्ञापकत्वरूपं प्रमाणत्वमुभयसाधारणम् । तत्र व्यवहारे यावद्बाधं प्रामाण्यमिति न्यायात् प्रमाणत्वम्।तेषां वस्तुत अज्ञातज्ञापकत्वाभावात्।ननु घटोऽयं घटोऽयमिति धारावाहिकज्ञाने अज्ञातज्ञापकत्वाभावात्तदेदं लक्षणमव्याप्तमिति चेन्न । धारावाहिकबुद्धिस्थले न ज्ञानभेदः किन्तु यावद्धटस्फुरणं तावद्धटाकारान्तःकरणवृत्तिरेकैव न तु नाना । वृत्तेः स्वविरोधिवृत्त्यन्तरोत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात् । तथा च तत्र प्रतिफलितचैतन्यरूपघटादिज्ञानमपि तत्र तत्कालीनमेकमेवेति नाऽव्याप्तिः । तस्मादज्ञातज्ञापकत्वं प्रमाणलक्षणं युक्तम् ॥ २० ॥

अन्तःकरणवृत्त्यवच्छिन्नचैतन्यरूपप्रमाणजन्यं यद्वृत्तिज्ञानं तद्गतं यत्प्रामाण्यं तत्स्वत एव गृह्यत इत्याह ।

प्रामाण्यं यच्चद्गतं तत्स्वतो हि
ग्राह्यं नान्यैरेप नो राजमार्गः ॥
अप्रामाण्यं गृह्यते तत्परस्मा-

च्छेपं ज्ञेयं स्वाकरस्थाद्विचारात् ॥ २१ ॥

प्रामाण्यमिति।यथा अनभ्यासदशायां प्रथमोत्पन्नं यज्जलज्ञानं तत्प्रमाणमप्रमाणं वेति प्रमाणगतासम्भावना प्रमाणसंशय इत्युच्यते तथा वेदान्ता अद्वितीये ब्रह्मणि प्रमाणं न वेति संशयः स च प्रामाण्यनिश्चयात् निवर्त्तते। तत्र प्रामाण्यनिश्चयस्तु स्वत एव। प्रामाण्यं नाम तद्वति तत्प्रकारकत्वम्। तस्य स्वतस्त्वन्नाम यावत्स्वाश्रयग्राहकग्राह्यत्वम्।स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिचैतन्यम्। दृष्टे द्रष्टारमिति श्रुतेः।तेन तद्गतं वृत्तिज्ञानगतं प्रामाण्यं स्वत एव गृह्यत इति स्वतःप्रामाण्यं श्रुत्यनुभवमूलात्।अप्रामाण्यं तु परतो गृह्यते।तच्च तदभाववति तत्प्रकारकत्वम्।तस्य वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात्परत एवाऽप्रामाण्यं गृह्यते इत्यर्थः। प्रामाण्यस्वतस्त्वपक्षे संशयो दोषवशादुपपद्यत इत्यादिविचार आकरतो भाष्यादिग्रन्थतो ज्ञेयः, अत्रविस्तरभयान्नोच्यत इत्यर्थः। प्रामाण्यस्वतस्त्वप्रक्रिया न स्वकपोलकल्पितेत्याह, एष नो राजमार्ग इति श्रुत्युक्तत्वात्। तत्र यन्न मनसा मनुते येनाऽऽहुर्मनो मतमिति श्रुतेः।मनः साक्षिभास्यं एवं मनसः साक्षिभास्यत्वे सिद्धे। कामः संकल्पो विचिकित्सा श्रद्धा। श्रद्धा धृतिरधृतिधीरताऽधीरेतेति तत्सर्वं मन एवेति श्रुतेः। धीशब्देन ज्ञानं मनोधर्मस्तदपि साक्षिभास्यं तद्गतं यत् प्रामाण्यं तदपि साक्षिभास्यमेवंरीत्या प्रामाण्यं स्वत एव गृह्यत इति एष नो ऽस्माकं वेदान्तिनां राजमार्गः तस्करतर्कपराहतो न भवतीत्युक्तमितिदिक् ॥ २१ ॥

अविद्यानिवृत्तिः प्रमाणेन साध्येत्याद्युक्तं तदनेन श्लोकेन स्पष्टीक्रियते।

ब्रह्माकारा तत्वमस्यादिवाक्यै-
र्या धीवृत्तिर्ब्रह्मविद्याभिधाना ॥
उक्ता वेदे मूलमज्ञानमेषा
दग्ध्वाऽऽत्मानं घातयेत्पूर्णवह्नौ ॥ २२ ॥

ब्रह्मेति । कारणभूतैस्तत्वमस्यादिमहावाक्यैर्या ब्रह्माकारा धीवृत्तिरुत्पद्यते सा ब्रह्मविद्या उक्तेति वेद। तद्यो वेद निहितं गुहायां परमे व्योमन्निति श्रुतौ । अस्याः श्रुतेरर्थः । तत्सर्व वेदान्तप्रसिद्धं ब्रह्म यः साधनचतुष्टयसंपन्नो ऽधिकारी वेद साक्षात्करोति निहितं स्थितं तद्वृत्त्युपलभ्यमानत्वात् तत्र निहितोक्तिः, गुहायां बुद्धौ परमे प्रकृष्टे व्योमन् व्योम्नि हृदयपुण्डरिकान्तर्हृदयाकाशेऽत्र वर्त्तमानबुद्धावित्यर्थः। एषा ब्रह्मविद्येति अभिधानं नाम यस्याः सा तथा मूलमज्ञानमधिकारिणो ब्रह्मत्वावरकमज्ञानमावरणविक्षेपशक्त्यात्मकं भावरूपं त्रिगुणं दग्ध्वा मदाह्याऽऽत्मानमपि स्वां वृत्तिमपि पूर्णवह्नौ अखण्डे ब्रह्मणि ब्रह्माग्नौ घातयेन्नाशयेदित्यर्थः । तथा च चरमवृत्तिक्षये यथा द्वितीयमुखाश्रयदर्पणाभावे मुखमात्रमवशिष्यते तथाऽखण्डब्रह्मा ऽवशिष्यते ।

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवा ऽवशिष्यते इति ॥
श्रुतेरितिभावः । उक्तं हस्तामलकाचार्यैः ।
यथादर्पणाभाव आभासहानौ
मुखं विद्यते कल्पनाहीनमेकम् ।
तथाधीवियोगे निराभासको यः
स नित्योपलब्धिस्वरूपो ऽहमात्मेति ॥ २२ ॥

ननु द्विविधमावरणमसत्वापादकमेकमपरमभानापादकम्। *तत्राऽऽद्यं परोक्षज्ञानेन नश्यति द्वितीयमपरोक्षमयैव नश्यति।* तदुक्तम्।

परोक्षज्ञानतो नश्येदसत्वाद्यृचिहेतुता।
अपरोक्षधिया नश्येदभानाद्यृचिहेतुतेति॥

एवं स्थितौ वाक्याद्वाऽपरोक्षज्ञानमुत्पद्यते क्वत्रा ऽप्य-दृष्टत्वात्। तथा सति तत्वमस्यादिवाक्याद्वाऽपरोक्षप्रमा तां विना अभानापादकावरणनाशाभावात् न ब्रह्माऽहमस्मीत्यपरो-क्षज्ञानमुत्पद्यत इत्यत आह।

अथ तत्वमसीति चेद्वाक्या-
दपरोक्षैव मतिर्हि भेदहंत्री॥
दशमस्त्वमसीति लोकवाक्या-
दशमोऽस्मीत्यपरोक्षधीर्यथाऽत्र॥ २३॥

अथेति। अथ चेद् वाक्याद्वापरोक्षप्रमा जायत इति मन्य-से चेत् तर्हि, दशमस्त्वमसीत्यत्र वाक्यादपरोक्षप्रमा दृष्टा तथा प्रकृतेऽपि तत्वमसीतिमहावाक्यादपरोक्षप्रमोत्पद्यते। तथा चा-ऽभानापादकावरणनाशादहं ब्रह्मास्मीत्यपरोक्षप्रमा घटत इत्यर्थः। शब्दप्रमाणं तु यत्र विषयः परोक्षस्तत्र परोक्षप्रमामेवोत्पादय-ति। यत्र चाऽपरोक्षो विषयस्तत्रापरोक्षप्रमां जनयति तस्यो-भयसाधारणत्वादिति भावः॥ २३॥

नन्विन्द्रियजन्यं ज्ञानमपरोक्षं न प्रमाणान्तरजन्यं ज्ञानम-परोक्षं दृष्टमतो वेदान्तशास्त्रोक्तमपरोक्षलक्षणमाह—

यदनावृतचित्तदात्मताऽदो

ह्यपरोक्षत्वमिह ब्रुवन्ति सन्तः ॥
अत एव जडार्थसंविदैक्या-
दपरोक्षं न जडेषु तत्त्वतोऽस्ति ॥ २४ ॥

यदिति । इह वेदान्तशास्त्रे यत् या अनावृतचिदनावृतसंवित्तस्यास्तदात्मता, तदात्मनो भावस्तदात्मता तादात्म्यमिति यावत् । तदपरोक्षत्वं सन्तो वेदान्तनिपुणाचार्याः ब्रुवन्ति नेन्द्रियजन्यं ज्ञानमपरोक्षम् । तस्याभावमस्यक्षे मनसो ऽनिन्द्रियत्वेन सुखाद्यपरोक्षे च व्यभिचारादिति योजना । अत्रा ऽयमर्थः । अनावृतसंवित्तादात्म्यमपरोक्षत्वमनावृत्तसंवित्साक्षिचैतन्यमन्तःकरणोपहितं चैतन्यं साक्षी तस्याऽऽवृतत्वे जगदान्ध्यप्रसङ्गः । तादात्म्यं नाम तद्भिन्नत्वे सति तद्भिन्नसत्ताकत्वम् तथा च दशमस्त्वमसीत्यत्र सामानाधिकरण्याद्दशमस्य त्वं पदार्थाभिन्नतया अपरोक्षत्वेन वाक्यादपरोक्षप्रमैव जायते ऽहं दशमोऽस्मीति । ननु न वाक्यादपरोक्षज्ञानं मनसा तत्साक्षात्कार इति चेन्न । सिद्धान्ते मनसोऽनिन्द्रियत्वस्योक्तत्वात् । वृत्त्युपादानत्वेन करणत्वाऽयोगाच्च । प्रमाणजन्यापरोक्षज्ञानस्यैव भ्रमनिवर्त्तकत्वाच्च । मनसोऽनिन्द्रियत्वं तु

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति ।

श्रुतेर्ज्ञेयम् । सुखादिसाक्षात्कारस्य चाऽप्रमात्वमिष्टमेव तस्य प्रतीतिकत्वात् । एवं तत्त्वमसीत्यत्रापि तत्पदलक्ष्यस्य ब्रह्मणस्त्वम्पदलक्ष्यसाक्ष्यभिन्नतया अनावृतसंवित्तादात्म्याचित्यापरोक्षत्वेन शोधितत्वम्पदार्थस्या ऽधिकारिणो मननिदिध्यासनसंस्कृतान्तःकरणसहकृतमहावाक्यादहं ब्रह्मास्मीत्यपरोक्षप्रमा जायत इति । अत एवेति । अनावृतसंवित्तादात्म्यमपरोक्षत्वमत

एव हेतोरन्तःकरणवृत्त्यवच्छिन्नचैतन्यस्येति शेषस्तस्य जडार्थसंविदैक्यात् । जडार्थाः घटादयः तदवच्छिन्ना या संवित्तया सहैक्यादेकलोलीभावात् । अनावृतसंविचादात्म्यरूपमपरोक्षत्वं व्यावहारिकं तज्जडेषु घटादिषु न स्वतो नास्ति जडाजडयोरभिन्नसत्ताकत्वाभावात् किन्तु घटादयो अविद्यावच्छिन्नचैतन्ये अविद्याकल्पिता एव भासन्त इत्यर्थः । तेषामधिष्ठानपारोक्ष्येणाऽपरोक्षं न स्वत इति फलितोऽर्थः ॥ २४ ॥

एतदेव विवृणोति ।

अधिष्ठानसत्वेन तस्याऽस्ति सत्व-

मधिष्ठानभानेन तस्यास्तिभानम् ॥

अतः कल्पितत्वं जडार्थेषु युक्तम्

यथा शुक्तिरूप्ये च रंगे च तद्वत ॥ २५ ॥

अधिष्ठानेति । यथा सादृश्याच्छुक्तिरजतभ्रमस्तथा शुक्तौ क्वचिद्रङ्गभ्रमोऽपि दृष्टस्तद्वदित्यर्थः । शेषं स्पष्टम् ॥ २५ ॥

ननु विषयावच्छिन्नब्रह्मचैतन्यस्य वृत्त्यवच्छिन्नप्रमाणचैतन्यस्य चैकलोलीभावादनावृतसंविचादात्म्यरूपमपरोक्षम्भवति चे तर्हि, ब्रह्मबुद्धिःसम्पन्नैव भवति । सद्यो मोक्षप्रसङ्गः सर्वेषामित्यत आह ।

विशेषस्त्वयं तत्वमस्यादिवाक्या-

द्विशिष्टत्वहान्या विशुद्धापरोक्ष्यम् ॥

घटाद्यर्थसंविद्घटाद्यर्थमिश्रा

ततो नास्ति तस्यां हि सद्यो विमुक्तिः ॥ २६ ॥

विशेष इति । तत्वमस्यादिवाक्याद्भागलक्षणया विशेषणां श-

परित्यागेन त्वम्पदलक्ष्यमात्मनो ऽब्रह्मत्वनिवृत्तौ तत्पदलक्ष्यस्य च परोक्षत्वनिवृत्तौ विशुद्धापरोक्ष्यमन्यानुपरक्तचैतन्यस्यानावृतसंवित्तादात्म्यरूपमपरोक्षत्वं भवति । यस्य सर्वमात्मैवाऽभूदिति श्रुतेः । प्रमाणप्रमेयादिव्यवहारहीनं भवतीत्यर्थः । घटाद्यर्थसंवित्तु घटाद्यर्थमिश्रा आविद्यकजडपदार्थोपरक्ता भवति घटं जानामीति प्रतीतेः । प्रमाणप्रमेयस्फुरणातस्य हेतोर्न सद्यो मुक्तिः अन्यानुपरक्तचैतन्यभानस्यैव मोक्षहेतुत्वादित्यर्थः ॥ २६ ॥

ननु जातायामपि ब्रह्मात्मबुद्धौ बाधितमपि द्वैतं भासते एव निर्विशेषमन्यानुपरक्तं चैतन्यं क दृष्टमितिचेत् तत्राह ।

समाधिकाले न जडं समीक्षते
स्वात्मा स्वभूमत्वमुपागतस्तदा ॥
व्युत्थानकाले सकलं बहिः स्थितं
प्रबाधितं पश्यति चोक्तरीतितः २७

समाधिकाले इति ॥ असम्प्रज्ञातसमाधिकाले जडं कल्पितं न पश्यति तदानीं स्वात्मा सर्ववृत्तिनिरोधात् स्वभूमत्वं स्वाभाविकं भूमस्वरूपत्वं प्राप्त इत्यर्थः । "यत्र नान्यत् पश्यति नाऽन्यत् शृणोति नाऽन्यद्विजानाति सभूमेति" श्रुतेः । अत एवोक्तं सूत्रकृता अपि संराधने प्रत्यक्षानुमानाभ्यामिति । संराधने समाधिकालेऽपि प्रत्यक्षं श्रुतिः, अनुमानं स्मृतिस्ताभ्यामुक्तत्वात् । निर्विशेषमात्मानं पश्यतीति सूत्रार्थः । तत्र श्रुतिः "ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान इति" । स्मृतिरपि ।

यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः इति ।

ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मनेति भगवतोक्तेश्चे-त्यर्थः।देहनिर्वाहार्थं व्युत्थानकाले प्रकर्षेण बाधितमधिष्ठानसत्त्वेन तस्याऽस्ति सत्त्वमित्याद्युक्तरीत्या वक्ष्यमाणरीत्या च पश्यतीत्यर्थः ॥ २७ ॥

उक्तसमाधिं लक्षयति ॥

सदपि चित्तमदोऽसदिव स्थितम्
भवति यत्र सुसाधनतो नृणाम् ॥
स हि समाधिरितीह सुलक्षितः
परमशर्मपदं परमार्थतः ॥ २८ ॥

सदपीति । सुतरां यमनियमाद्यष्टांगसाधनैः सदपि चित्तं सर्ववृत्तिनिरोधादसदिव स्थितं निश्चलं भवति स समाधिरिति इह व्यवहारभूमौ हीति विद्वत्प्रसिद्धः सुलक्षितः सुष्ठु शोभनत्वेन, लक्षित उक्तः।तथा च सूत्रम् तदेवार्थमात्रनिर्भासस्वरूपशून्यमिव समाधिरिति । तादृशं चित्तं परमशर्मपदं परमं निरतिशयं शर्म-सुखं, प्रपद्यते प्राप्यते ऽनेनेति पदं परमार्थतो अकृत्रिममित्यर्थः॥

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्या ऽऽत्मनि यत्सुखं भवेत्।
न तद्गिरा वर्णयितुं सुशक्यते
स्वयं यदन्तःकरणेन गृह्यत इति श्रुतेः ।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियमिति गीतोक्तेश्च॥२८॥

वक्ष्यमाणरीत्या बाधितं पश्यतीत्युक्तं तदेवानुभवानुवादेन दर्शयति ।

अघटनघटनापटीयसीयम्

यदुपतिदेववरस्य शक्तिरुच्चैः ॥
क्क च बत रशना क्क सर्पभानम्
क्क च रविरर्क इह द्वितीयभानम् ॥ २९ ॥

अघटनेति ॥ इयं समस्तनामरूपात्मकप्रपञ्चाकारेण परिणता श्रीकृष्णस्य शक्तिः सामर्थ्यविशेषः। "देवात्मशक्तिं स्वगुणैर्निरूढामिति"श्रुतेः यदुपतीत्युक्तम्।एतेन तस्याः परतन्त्रत्वमुद्घोषितम्। उच्चैः मेरोरिव भगवच्छरणतां विना अनुल्लङ्घनीया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति स्मृतेः। तस्याः प्रभावं दर्शयति। अघटनं केनाऽपि कर्त्तुमशक्यं तस्य घटना रचना तस्यां पटीयसी कुशलेत्यर्थः। एतेन विवर्त्तवादः प्रदर्शितः। अतात्त्विकोऽन्यथाभावप्रदर्शनात्पटीयस्त्वमेव दर्शयति। बत इति खेदे। रशना रज्जुविशेषः क्क तस्यामधिष्ठानभूतायां लौकिकसामग्र्यभावेऽपि क्क सर्पस्तस्य भानं च क्केत्यर्थः। अयम्भावः। पुरोवर्तीन्द्रियसन्निकर्षानन्तरमिदमाकारवृत्तौ सत्यां इदन्त्वावच्छिन्नचैतन्यनिष्ठा रज्जुत्वप्रकारिका अविद्या सादृश्यदर्शनसमुद्भूतसंस्कारसहकृता सती सर्पाकारेण सर्पज्ञानाकारेण च स्वयंपरिणम्य स्वपटीयस्त्वं दर्शयतीति।चेत्यपरम्।गगनस्थो रविरेकः द्वादशारण्यादौ द्वितीयरविदर्शनं क्केति। यदुपतिदेववरस्य शक्तिरित्यनेन भोजयितेश्वरो दर्शितः। क्क च बत रशनेत्यनेन भोग्यं दर्शितं।क्क च रविरेक इत्यादिना भगवत् प्रतिबिम्बो जीवो भोक्तेति त्रिविधो भेदभ्रमो भगवच्छक्तिमूलो ऽनिर्वचनीय एवं रीत्या बाधितं पश्यतीत्यर्थः ॥ २९ ॥

पुनश्च स्वानुभवानुवादेन प्रपञ्चस्य बाधितत्वं दर्शयति पञ्चभिः पद्यैः ।

क च परमसुखं निजस्वरूपम्
क च मम दुःखपरम्पराविलासः ॥
क च मम विभुता क कर्मदैन्यम्
क च मम तेन बभूव पाशबन्धः ॥ ३० ॥

क चेति । परमसुखदुःखपरम्पराविलासयोस्तथा विभुता-कर्मदैन्ययोः परस्परात्यन्तविरुद्धयोः सम्बन्धघटना किमन्यन्मायाया अघटनघटनापटीयस्त्वादितिभावः । बभूवेति पदस्याग्रिमश्लोकेऽपि सम्बन्धो बोध्यः शेषं स्पष्टम् ॥ ३० ॥

क च मम चितिता क तच्च मौढ्यम्
शिव ! शिव ! किं करवाणि तत्र मेऽस्ति ॥
क च मम सुखरूपताऽनुभूतेः
क च मम बाह्यपदार्थशर्मवाञ्छा ॥ ३१ ॥

केति ॥ चितिता निर्विषयज्ञानस्वरूपता तत्र मौढ्यमज्ञान-केति शिव शिव इति खेदे । तदज्ञानं मम नास्ति रवाविव तमो बोधात्पूर्वमहमज्ञ इत्यादि मायया दर्शितं तत्र किमहं करवाणि तस्याः माबल्यादित्यर्थः ॥ ३१ ॥

क्व च बत निरहंकृतिर्ममात्मा
क्व च तनुषु प्रजडास्वहंकृतिर्मे ॥
क्व च मम ममताविहीनतेयम्
क्व च ममता गृहपुत्रबान्धवादौ ॥ ३२ ॥

क्वेति । ममाऽऽत्मेति राहोः शिर इतिवत्कल्पनया षष्ठी ।

तनुष्विति वहुवचनं एकस्यैवाऽऽत्मनो अतीतानागतानेकदेहाभिप्रायं अन्यथा पूर्वानुभूतपदार्थस्मृतिं विना जननीस्तनपानाय मृगशावकादेः प्रवृत्तिर्न स्यात् ॥ ३२ ॥

क्व च मम निरुपाधि रूपमेकं
क्व च म उपाधिकृतस्त्वनेकभेदः ॥
क्व च मम सविशेषतानिरासः
क्व च म उपाधिकृतं विशेषभानम् ॥ ३३ ॥

क्वेति ॥ तत्र को मोहः कः शोक एकत्वमनुपश्यत इति श्रुतेः । निरुपधिकमेव रूपं क्व ।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा वहुधा चैव दृश्यते जलचन्द्रवदिति ॥

उपाधिकृतो भेदः क्व । दृष्टमस्पर्शमरूपमव्ययमित्यादिश्रुतिभिः । तथास्थूलमना एवेत्यादिभिश्च सविशेषत्वानिरासः क्वेत्यादयः श्रुतयो ज्ञेयाः ॥ ३३ ॥

क्व च ममास्तुविरागितास्वरूपम्
क्व च मम कामविलासिनीषु चित्तम् ॥
क्व च मम न हि बन्धनं न मोक्षः
क्व च मम बन्धनमोक्षणप्रवादः ॥ ३४ ॥

क्वेति ॥ शास्त्रे लोके च प्रकर्षेण वादः कथनमित्यर्थः । उभावपि श्लोकौ स्पष्टार्थौ ॥ ३४ ॥

किमेतावतेत्यत आह—

अज्ञानमेतत्सकलं व्यलीकम्

तज्जं सुखं दुःखमपि व्यलीकम् ॥
मृगोदकं सर्वमपि व्यलीकम्
तज्जास्तरङ्गा अपि ते व्यलीकाः ॥ ३५ ॥

अज्ञानमिति ॥ एतत् सर्वं पूर्वोक्तं दुःखपरम्पराविलासादिकमखण्डैकरसे नित्यनिरतिशयानन्दस्वरूपे चिन्मात्राश्रयविषयत्रिगुणात्मके भावरूपे आवरणविक्षेपाद्यनेकशक्त्यात्मके, जगति जडरूपेणाऽनुगते पुरुषे मौढ्यरूपेणा ऽनुगतमपवर्गपरिपन्थि अहमज्ञइति प्रतीतावध्यस्ततया भासमानत्वाद्व्यलीकं, तज्जं ससाधनं सुखं दुःखमपि व्यलीकं, तयोः सत्यत्वे मोक्षप्रवृत्तिरेव न स्यात् । न हि सत्यं निवर्तेत इति न्यायादित्यर्थः । यथा मृगोदकं सर्वमप्यंशांशिभावरहितं व्यलीकं तत्कार्यन्तरङ्गादिकमपि व्यलीकं तथेदमज्ञानं तत्कार्यं च मृषेत्यर्थः । नन्वज्ञानस्य भावरूपत्वे किं प्रमाणमितिचेच्छृणु । श्रुतिं तदनुकूलां युक्तिं चाऽवधारय। "मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरमिति श्रुतेः।जगत्परिणामोपादानत्वात् प्रकृतिर्नाऽभावरूपा। नह्यभावः परिणमते अतो नाऽभावरूपम्। किञ्च अहमज्ञ इति प्रतीतौ प्रतियोगिभानमन्तरेणैव भासमानत्वात् नाऽभावरूपं, तस्माद् यथा धर्मविरुद्धो अधर्मो भावरूपो दुःखकारणं तथेदमज्ञानमपि भावरूपं दुःखकारणम् । उक्तं च ।

जाड्यं जगत्यनुगतं खलु भावरूपम्
मौढ्यं च पुंगतमिति प्रतिभाति तद्वत् ।
जाड्यं च मौढ्यमिति वाऽनुभवप्रसिद्धम्
अज्ञानमाहुरपवर्गपिधानदक्षमिति ॥

नन्वज्ञानस्य भावरूपत्वे किं प्रमाणभूतं चेच्छ्रुतिं तदनु-

कूलां युक्तिं च अवधारयेदिति ॥ ३५ ॥

ननु सकार्यमज्ञानं मृषा चेत् तथापि प्रतीयते। कथं तस्यापलापः कर्तुं शक्यइत्यत आह—

सामग्रिका यावदिहास्ति भाने
प्रभासनं नाम मृषा मृगोदा ॥
प्रारब्धवेगात्सुखदुःखभानम्
भूयात्तथा नो न हि कापि हानिः ॥ ३६ ॥

सामग्रिकेति । यथा मृगोदकमूपरभूमौ मृषात्वेन बहुशः प्रतीतमपि यावत्सामग्रिकासूर्यकिरणादिरूपा तावत्पर्यन्तं भासते तावता न तस्य सत्यत्वं वक्तुं शक्यमेवमधिष्ठानमज्ञानेन, मपञ्चहेतुभूतमूलाज्ञाननिवृत्तावपि तत्कार्यं सुखदुःखसाक्षात्कारः प्रारब्धरूपसामग्रिवशाद् भासतां नाम न ह्येतावता नोऽस्माकमज्ञानं तत्कार्यप्रपञ्चे सत्यत्वबुद्धिरूपा हानिर्नास्त्येवेत्यर्थः । उक्तं च । उत्खातदंष्ट्रोरगवदविद्या किं करिष्यतीति, न हि तदपलापं ब्रूमः किन्तु सकार्यमज्ञानं मृषेति ब्रूम इति ॥ ३६ ॥

भ्रान्त्या कृतानां खलु कर्मणां मया
विपाक एवं बहुधाऽनुभूयते ॥
भ्रान्तिर्निवृत्तैव तथापि कर्म
प्रारब्धमेतन्नहि मुञ्चतीह ॥ ३७ ॥

भ्रान्त्येति । भ्रान्तिः सत्कार्यं मूलाज्ञानं ततः कामस्ततः कर्माकर्मविकर्मरूपाणि कर्माणि मया कृतानि तेषां विपाको बहुधा बहुप्रकारमनुभूयते । कर्मविपाकस्तु पतञ्जलिनोक्तः ।

सति मूले तद्विपाको जात्यायुर्भोगाः ते ह्लादपरितापफलाः पुण्यहेतुत्वादितिसूत्रेण । एवं सति भ्रान्तिर्निवृत्तैव तथाऽपीह देहे प्रारब्धं कर्म मां हीति निश्चयेन न मुञ्चतीत्यर्थः । ननूपादाननाशेऽपि उपादेयं तिष्ठतीति न दृष्टमिति च तत्राहुः ।

ज्ञात्वाप्यसर्पं सर्पोत्थं यथा कम्पं न मुञ्चति ।
विध्वस्ताखिलमोहोऽपि मोहकार्यं न मुञ्चतीति ॥

यथा वा तार्किकैः समवायिकारणनाशात् कार्यनाशमङ्गीकुर्वद्भिरपि निरुपादानमेव द्रव्यं क्षणमात्रं तिष्ठतीत्यङ्गीकृतं तद्वत् । उपादाननाशेऽपि तदुपादेयमहङ्कारदेहादिनिरुपादानमेव न यावत्प्रारब्धकर्मभोगमनुवर्तते दृष्टत्वात् । न हि दृष्टे ऽनुपपन्नं नामेति न्यायात् । श्रुतिरपि ।"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इति । अहं ब्रह्मास्मीति चरमसाक्षात्कारानन्तरमहं ब्रह्म न भवामि न जानामीति प्रत्ययो नास्त्येव यदि परं घटं न जानामीत्यादिप्रत्ययः स्यात् तदुपादानाय संस्कारः कल्प्येत । अज्ञानलेशपदेनाऽपि भाष्यस्थेनाऽयमेव संस्कारो विवक्षितः। न हि सावयवमज्ञानम् कियन्नष्टं कियत्तिष्ठतीति वाच्यम्, तस्यानिर्वचनीयत्वात् । तस्माज्जीवन्मुक्तस्य घटं न जानामीत्यादिप्रत्ययः संस्कारमात्रादेव । उक्तं च सङ्क्षेपशारीरके ॥ गन्धस्या या लेशसंस्कारभाषा विज्ञातव्या भाष्यकारीया तत्रेति किं बहुना सर्वोऽपि तस्य व्यवहारः संस्कारमात्रादेवेति । तदुक्तं तत्रैव ॥

पश्यामि चित्रमिव सर्वमिदं द्वितीयम्
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ॥
आत्मानमद्वयमनन्तसुखैकरूपम्
पश्यामि दग्धरशनामिव च प्रपञ्चमिति ॥

तस्माद् भ्रान्तिर्निवृत्तैव तथापि कर्म प्रारब्धमेतन्न हि मुञ्चतीति साधूक्तमिति ॥ ३७ ॥

कर्म तावन्नाऽऽत्मसमवायि किन्त्वन्यसमवायीत्येवं सति यत् कर्मकर्त्तृत्वं स्वस्य सापि भ्रान्तिरित्याह ।

शरीरकर्मेन्द्रियचित्तसाध्य-
मारोप्य तत्रात्मनि कर्मजातम् ॥
कर्त्ताहमस्मीतिविपर्ययोऽयम्
चन्द्रे यथा मेघगतिस्तथैव ॥ ३८ ॥

शरीरकर्मेति । शरीरं भोगायतनं कर्मभोगप्रदं श्रोत्रादीनि बाह्येन्द्रियाणि चिन्मयन्तःकरणं तैः साध्यं तन्निष्ठमित्यर्थः । यथा मेघनिष्ठां गतिं चन्द्र आरोप्य चन्द्रो धावतीति प्रतीतिस्तथाऽहं करोमि भ्रान्तिरित्यर्थः ॥ ३८ ॥

आविद्यकं कर्माऽविद्यावतामुपकारकं तैराविद्यकमिति मत्वा न त्याज्यमित्याह ।

आविद्यकं यदपि कर्म तथापि सर्वम्
कृष्णार्पितं विविदिषां जनयेच्च शुद्धिम् ॥
काम्यं निषिद्धमपि जन्मफलं समस्तम्
सन्त्यज्य कर्म नियतं विदधीत मर्त्यः ॥ ३९ ॥

आविद्यकमिति । सर्वं लौकिकमलौकिकं वा कर्माऽऽविद्यकं यद्यपि तथापि कृष्णार्पितं सत्, यत्करोषि यदश्नासीत्यादि स्मृतेः, चेतःशुद्धिं जनयित्वा विविदिषां जनयेत् । तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशके-

नेति बृहदारण्यकोक्तेः । नियतस्य तु संन्यासः कर्मणो नोपपद्यत इति स्मृतेः । तदनुष्ठेयमित्यर्थः । निषिद्धं न पलाण्डुं भक्षयेदित्यादि तथा श्येनेनाऽभिचरन्यजेतेति वेदविहितत्वेऽपि आभिचारिकं फलदोषेण दुष्टत्वात् त्याज्यमेवेत्यर्थः । काम्यमित्यत्र मतद्वयं तत्राचार्यमते काम्यं नाऽनुष्ठेयमेव । वार्तिककारमते तु काम्यमपि कामनां त्यक्त्वा ज्योतिष्टोमादीश्वराराधनत्वेनाऽनुष्ठितं सत् विविदिषां जनयेदेवेति ॥ अन्यथा काम्यकर्मप्रतिपादकश्रुतीनां वैयर्थ्यं स्यादित्याकरे विस्तरः ॥ ३९ ॥

कर्मानुष्ठानं चित्तशुद्धिद्वारा विविदिषोत्पादने समर्थमेव न तु ज्ञानसमुच्चयेन तस्यानुष्ठानं तस्य तत्राऽसामर्थ्यम् इत्याह—

न कर्म विज्ञानसमुच्चयः स्या-
त्कर्मोपमर्दः खलु तत्त्वबुद्धेः ॥
अज्ञाननाशो न हि कर्मणाऽतो
ज्ञानेन मुक्तिर्न समुच्चितेन ॥ ४० ॥

नेति ॥ तत्त्वबुद्धेस्तत्त्वज्ञानादाविद्यकानां कर्मणामुपमर्दः स्यात् । यद्वा कर्मानुष्ठानहेतोः क्रियाकारकविभागस्या ऽविद्याकृतस्य विद्यासामर्थ्यादुपमर्दो बाधः स्यात् । यत्र त्वस्य सर्वमात्मैवा ऽभूत् केन कं पश्येदित्यादिना । तथा चोपमर्दितकर्मसमुच्चयो मुक्तावनुपयुक्तः । किञ्च विज्ञानं तावदज्ञानं विनाश्य मुक्तिजननसमर्थं तेजस्तिमिरयोरिव तयोर्विरोधात् । कर्माविद्ययोर्विरोधाभावान्ना ऽज्ञाननाशने तस्य सामर्थ्यमतो न ज्ञानसमुच्चयो युक्त इत्यर्थः ॥ तदुक्तमाचार्यैः ॥

अविरोधितया कर्म नाऽविद्यां विनिवारयेत् ।

विद्या ऽविद्यां निहन्त्येव तेजस्तिमिरसङ्घवदिति ॥

अन्यत्रा ऽप्युक्तम्—

प्रमाणजन्यज्ञानेन विना विधिशतैरपि ।

रज्जुसर्पादिविभ्रान्तिर्न क्वापि विनिवर्त्तत इति ॥

तस्मात् कर्मणा ज्ञानसमुच्चयोना ऽनुष्ठेयस्तस्या ऽन्यथा सिद्धत्वादिति ॥ ४० ॥

भ्रान्त्या कृतानां कर्मणां पुरुषस्य फलभोक्तृत्वे केन प्रकारेणेत्यपेक्षायां तद्दर्शयति—

शरीरकर्मेन्द्रियचित्तयोगे
धियः सुखाकारतया विकारः ॥
तस्योपलब्धृत्वमदो ऽस्य कर्म
फलस्य भोक्तृत्वमितो ऽन्यथा न ॥ ४१ ॥

शरीरेति ॥ शरीरं भोगायतनं कर्म यज्ञादिः उपासनारूपं च बाह्यानीन्द्रियाणि दश चित्तमन्तःकरणमेतेषाम् । द्वन्द्वैकत्वम् । इदं पञ्चमाणादेरुपलक्षणम् तथा च सप्तदशात्मकं सूक्ष्मशरीरं भोगसाधनं एतेषां योगे सति धियो बुद्धेः धर्मवशात् सुखाकारतया अधर्मवशात् दुःखाकारतया च विकारः परिणामः । तस्य परिणामस्योपलब्धृत्वं इदमनुकूलं प्रतिकूलं वेति यत् ज्ञातृत्वं अदः पुरुषस्य कर्मफलभोक्तृत्वमितोऽन्यथा प्रकारान्तरेण नाऽस्तीत्यर्थः । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति श्रुतेः । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत इतिस्मृतेः ॥ ४१ ॥

स्वप्ने भोगसाधनवैलक्षण्यं जागरतो दर्शयति—

स्वप्ने तु सर्वेन्द्रियदिव्यदेह-

योगो ऽस्य सर्वः किल वासनात्मा ॥
शेषं समानं सुखदुःखभोगो
न वस्तुगत्या मयि चित्स्वरूपे ॥ ४२ ॥

स्वप्नेत्विति ॥ स्वप्नदेहस्या ऽयोनिजत्वाद्दिव्यदेह इत्युक्तम् । वासनात्मा संस्कारस्वरूप इति किल श्रूयते । अस्य सर्वावतो मात्रामुपादायेति श्रुतेः । मात्रां पुष्पपुटस्येव संस्कारः । अयं च जाग्रत्स्वप्नयोः सुखदुःखभोग आविद्यककर्मनिमित्तोवस्तुगत्या वस्तुतः मयि चित्स्वरूपे नास्तीति स्वानुभवसिद्धमित्यर्थः । शेषमन्तःकरणपरिणामस्तस्योपलब्धृत्वं च समानमेवेत्यर्थः। इच्छा द्वेषः सुखं दुःखं सङ्घातः चेतना धृतिरिति स्मृतेः। सुखदुःखे मनोधर्मः। अत उक्तम् । सुखदुःखाकारतया परिणाम इति ॥ ४२ ॥

जाग्रत्स्वप्नभोगसाधनवैलक्षण्यं सुषुप्त्यवस्थायां दर्शयति—

सुषुप्त्यवस्थासुखदुःखभोगो
विनापि कर्मा ऽस्य तथा प्रतीतेः ॥
तत्राप्यविद्यागुणवृत्तमेत-
न्निवृत्तिरस्याः परमः पुमर्थः ॥ ४३ ॥

सुषुप्त्यवस्थेति ॥ अहं सुखमस्वाप्सम् । अहं दुःखमस्वाप्समिति प्रतीतेः विनाऽपि कर्म निमित्तकारणं कर्म विनापि सुखदुःखभोगः सुषुप्त्यवस्थायामनुभवसिद्धमित्यर्थः ॥ सुषुप्त्यवस्था अव्याकृताऽवस्था तस्यां कर्म व्याकृतरूपं नाऽस्त्येवाऽत उक्तं विनापि कर्मेति।अन्यथा जाग्रद्दशाया परामर्शानुपपत्तिः स्यात् । तर्हि तत्र किंनिमित्तः सुखदुःखभोग इति चेत् तत्राऽऽह । तत्रा-

ऽपीति। सुषुप्त्यवस्थायामपि अविद्यागुणाः सत्वरजस्तमांस्युपादानभूतानि तेषां वृत्तं तन्निमित्तमित्यर्थः।तथा सत्वं सुखाकारतया परिणमते रजो दुःखाकारतया परिणमते तमो मोहाकारतया परिणमते तेन सुखमस्वाप्सं दुःखमस्वाप्सं मूढोऽहमिति प्रत्ययः। ननु गुणसाम्यावस्थानं तत्रोक्तं विरुध्येतेति चेन्न। तस्य गाढसुषुप्त्यवस्थाविषयत्वात्। अतो गुणत्रयरूपाविद्यानिवृत्तिरेव परमपुरुषार्थो येन सर्वावस्थोच्छेद इत्यर्थः। कर्माश्रयस्याऽहङ्कारस्य तत्र लीनत्वाद्विनाऽपि कर्मेत्युक्तम्। ननु सुषुप्तौ यथा सुखमनुभूतं स्मर्यते। तथा ऽहङ्कारोऽपि तत्राऽनुभूत एव स्मर्यते इति वाच्यम्। अन्यथा ऽहमस्वाप्समिति परामर्श एव न स्यात्। तथा च। तत्र कर्माश्रयाहङ्कारसत्वेन कथमुक्तं विनाऽपि कर्म सुखदुःखभोग इति चेन्नैवम्। तत्राऽहङ्कारस्वीकारे पुमान् जाग्रियात्। जाग्रदवस्थायामेव तस्य प्रतीतेरहं जागर्मीति प्रतीतेर्न सुषुप्तिस्वप्नयोस्तथा प्रतीत्यभावात्। तर्हि कथमस्वाप्समिति सामानाधिकरण्येन प्रतीतिरितिचेदुच्यते। यथा मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलोहित्याध्यासे रक्तं मुखमिति सामानाधिकरण्येन प्रतीतिस्तथा ऽहङ्काराश्रयसाक्षिचैतन्यस्य स्मरणाश्रयत्वादहमस्वाप्समिति सामानाधिकरण्येन प्रतीतिरतो न सुषुप्तावहंकारोऽनुभूतः स्मर्यते। तथा च कर्माश्रयाहंकारं विनैवाऽहं सुखमस्वाप्सं दुःखमस्वाप्समिति प्रत्यय उपपद्यते तस्य च यथोक्तव्यवस्थैव प्राप्नोति न किंचिदनुपपन्नमिति ॥ ४३ ॥

बुद्धिस्वभावजदुःखस्य प्रारब्धाधीनत्वेन बुद्धमूढयोर्भोक्तृत्वं समानं तथापि बुद्धं प्रति विशेषमाह—

समानमेतद्धि विमूढबुद्धयो-

भोक्तृत्वमस्मिन्खलु संशयो न ॥
विमूढलोकस्य विषादहर्षौ
सुज्ञस्य तौ नैव विशेष एषः ॥ ४४ ॥

समानमिति ॥ पदार्थः स्पष्ट एव । मत्वा धीरो हर्षशोकौ जहातीति श्रुतेः । दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृह इति स्मृतेश्च । बुद्धात्मतत्त्वस्य हर्षविषादौ न स्त इत्यर्थः ॥ ४४ ॥

अन्यमपि तं प्रति विशेषमाह—

धैर्येण शौर्येण च धीरलोकः
संग्रामतो नैव पराङ्मुखः स्यात् ॥
तत्त्वज्ञधीरः सुखदुःखघातैः
प्रातैः प्रतीचो न पराङ्मुखः स्यात् ॥ ४५ ॥

धैर्येणेति । धीरलोको रणधीरलोकस्तत्त्वज्ञः धीरः आधिदैविकाध्यात्मिकाधिभौतिकभेदभिन्नैर्विषसंपृक्तान्नमिव सुखमिश्रदुःखघातैश्च सुखदुःखानां घाताः दुःसहानुभवा स्तैस्तत्त्वज्ञत्वात् पुनः पुनः तत्त्वानुस्मृत्या धीरः प्रतीचः स्वप्रकाशपरमानन्दघनात् न पराङ्मुखो ऽहं सुखी दुःखीति प्रत्ययवान् न भवतीत्यर्थः ॥ ४५ ॥

अहं सुखी दुःखीति प्रत्ययो ऽपि भ्रान्तिरेवेत्याह—

बुद्धिस्थदुःखं निजआत्मनीद-
मारोप्य दुःखीति विपर्ययो मे ॥
आरोपितं तत्सकलं मृषेति
मत्वा निजात्मानमुपाश्रितोऽस्मि ॥ ४६ ॥

बुद्धिस्थदुःखमिति । मत्वाऽन्वयव्यतिरेकाभ्यां निश्चित्य निजात्मानं स्वप्रकाशपरमानन्दघनमाविद्यकसुखदुःखाद्यस्पृष्टमुपाश्रितोऽस्मि तत्रैव बुद्धिस्थैर्यं प्राप्तोऽस्मीत्यर्थः ॥ ४६ ॥

इदानीं महावाक्यार्थानुभवसिध्यर्थं तत्पदशोधनमनेकप्रकारैः क्रियते—

ज्ञानं समस्तं खलु धर्मिमात्रे
भ्रान्तं प्रकारे तु विपर्ययः स्यात् ॥
अज्ञानतज्जं सकलं प्रकारं
हित्वानिजात्मानमुपाश्रितोऽस्मि ॥ ४७ ॥

ज्ञानमिति । सर्वज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः स्यादिति न्यायात् । धर्म्यंशे सन्मात्रे वस्तुनि ज्ञानं न भ्रान्तं तस्य अधिष्ठानत्वात् । तर्हि कुत्र भ्रान्तमत आह । प्रकारे विपर्ययो भ्रान्तिः सति धर्मिण्यज्ञानं भ्रान्तिरध्यस्ततया प्रतीयमानत्वात् । तथा तज्जं सकलमपि कार्यं प्रकाररूपं भ्रान्तिरूपमध्यस्ततया प्रतीयमानत्वात् । मिथ्येति हित्वोपेक्ष्य निजात्मानं परमार्थसत्यं धर्मिणमुपाश्रितो ऽस्मि तत्रैव बुद्धिस्थैर्यं प्राप्तोस्मीत्यर्थः ॥ ४७ ॥

अध्यस्तत्वमेव दर्शयति—

स्वतः प्रकाशादिह धर्मिणोऽन्यो
जडः प्रकारः परिभासते हि ॥
तमेव भान्तं ह्यनुभाति सर्व-
मित्यादिवेदार्थमिमं ब्रवीति ॥ ४८ ॥

स्वत इति । एको हिशब्दो निश्चयार्थो ऽन्यः पाद-

पूरणार्थः ॥ सन्मात्रात् स्वतःप्रकाशाद् धर्मिणः जडः प्रकारः प्रतिभासते परितो दृश्यते, इह संसारितादशायां स्वतश्चिद्रूपाभावाज्जडइत्युक्तम् । अन्यासिद्धिकत्वात् प्रकारकमुक्तम् । अत्राऽर्थे श्रुतिं प्रमाणयति । तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति। अस्याः श्रुतेरर्थः । तमधिष्ठानभूतं भान्तं स्वप्रकाशमनु पश्चात् सर्वं कल्पितमधिष्ठानविलक्षणं मायातत्कार्यरूपं भाति भासते भासमानसमये च न स्वतो भाति किन्तु यस्य चैतन्यस्य भासा प्रकाशेन सर्वमिदं विभातीत्यर्थः । अनुभातीत्यर्थः । अनुभातीत्यनेन प्रकारकत्वमुक्तं यस्य भासा विभातीत्यनेन जडत्वमुक्तमिति भावः ॥ ४८ ॥

एतदेव सदृष्टान्तमाह—

जडं न सन्नापि च चित्स्वरूपं
परस्य सत्तास्फुरणे न भाति ॥
अतः प्रकारत्वमुदीरितं तद्-
रज्जौ यथालीकभुजङ्गमादेः ॥ ४९ ॥

जडमिति । जडं न सन्नाऽपि च चित्स्वरूपम् । अत्र हेतुमाह । परस्येति । अधिष्ठानस्येत्यर्थः । अधिष्ठानचैतन्यस्वरूपस्य परब्रह्मण इत्यर्थः । अतो ज्ञानन्तत्कार्यस्य प्रकारकत्वमुक्तं श्रुतियुक्तिभ्यामित्यर्थः । तत्र दृष्टान्तमाह । रज्जाविति ॥४९॥

प्रकारोत्पत्तिक्रममाह—

अहो हि मायाबलमेतदुच्चै-
स्तद्धर्मिणं भान्तमपि स्वतस्तम् ॥
आच्छाद्य विक्षिप्य च पञ्चभूत-

कार्यं प्रकारं जनयेत्तथाऽन्यत् ॥ ५० ॥

अहो हीति। अहो इति विस्मये हि निश्चये। माया मूलाज्ञानं तस्य बलं सामर्थ्यमेतत् महदुच्चैर्ब्रह्मादिभिरप्यनुल्लङ्घनीयम्। किं तदित्याह॥ स्वतो भान्तं स्वप्रकाशधर्मिणमाच्छाद्य अन्धकार इव गर्भागारं, चेत्यपरं, स्वयं विक्षिप्य विक्षेपशक्तित्वं प्राप्य पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकानि आकाशवायुतेजोजलपृथिव्याख्यानि पञ्चभूतानि तत्कार्यं स्थूलदेहादिरूपं एतं प्रकारं जनयेदुत्पादयेदित्यर्थः । एतदुपलक्षणं महदहङ्कारादीनाम् ॥ तथाऽन्यद्व्यवहारादिकादन्यादित्यर्थः । प्रातिभासिकं रज्जुसर्पादि रज्ज्ववच्छिन्नचैतन्यमाच्छाद्य तत्र सर्पादिकं स्वीयविक्षेपशक्त्या जनयेदित्यर्थः । आगन्तुकदोषजन्यं तदन्यत् व्यावहारिकमिति तल्लक्षणादित्यर्थः। भासिकं प्रातीतिकमिति पर्यायः ॥ ॥ ५० ॥

प्रकारस्वरूपमाह—

अयं प्रकारः सदसद्विलक्षणः
स्त्रीपुंतनुभ्यां हि यथा नपुंसकः ॥
यद्वा प्रकारः खलु सद्विलक्षणो
दुःखानृतान्तात्मतया प्रतीतितः ॥ ५१ ॥

अयमिति। अयमनुभूयमानः प्रकारः सच्चेद्वक्तव्यस्तर्हि नश्यति । नाऽसतो विद्यते भाव इति स्मृतेः । सद्विलक्षणो असच्चेद् वक्तव्यस्तर्हि प्रतिभाति । न वन्ध्यापुत्रवदसत् । अत उभयविलक्षणः तत्र दृष्टान्तः स्पष्टः । तथा च सदसद्विलक्षणो नामाऽनिर्वचनीयप्रकार इति फलितोऽर्थः। असद्विलक्षणमित्युक्ते

सत्यतिव्याप्तिः अत उक्तं सद्विलक्षणमिति । तावत्युक्ते ऽसत्यतिव्याप्तिरत उक्तम् सद्विलक्षणमिति अभ्युपेत्येदमुक्तम् । असति निःस्वरूपेऽतिव्याप्तिशङ्कानवकाशात्। असन्नाम किञ्चिदस्ति चेदसत्वव्याघातो नास्ति चेत् कुत्राऽतिव्याप्तिरित्यस्वरसाल्लक्षणान्तरमाह । यद्वेति । सद्विलक्षणत्वमनिर्वचनीयत्वम् । कुतः दुःखानृतान्तात्मतया प्रतीतेः। सत्यज्ञानानन्दानन्तं ब्रह्म तद्विलक्षणत्वेनाऽनुभूयमानत्वात् सद्विलक्षणत्वमनिर्वचनीयत्वं मायातत्कार्यस्येत्यर्थः । ननु तर्हि कथमाचार्योक्तिः । सदसद्भ्यामनिर्वचनीयमितिचेत् प्रथमतः शिष्यबुद्धिव्युत्पादनमात्रे तात्पर्यादाचार्याणामिति । कालत्रयाबाध्यत्वं सत्वं तद्भिन्नमनिर्वचनीयमित्यर्थः ॥ ५१ ॥

यत् पूर्वमुक्तं सद्धर्मिणं सद् ब्रह्म तद्धर्मिणमाच्छादयतीति तत्र विशेषमाह—

सत्ता स्फुरत्ता परमात्मनो या
नाऽऽच्छाद्यते सा ह्युपजीव्यभावात् ॥
आनन्दमाच्छादयतीव माया
तन्नाशने तत्वमसीतिवाक्यम् ॥ ५२ ॥

सत्तेति । सच्चिदानन्दं ब्रह्म तत्र सदंशं चिदंशं च माया मूलाज्ञानं ना ऽऽच्छादयति। कुतः। स्वस्योपजीव्यभावादुपजीव्यत्वात् सदंशचिदंशयोः स्वोपजीवकत्वेन । तयोराच्छादने अज्ञानस्यैव सिद्धिर्न स्यात् । अहमज्ञो मामहं न जानामीत्यज्ञानसिद्धिसाक्षिणैवा ऽन्यगतिकत्वात् । प्रमाणैरज्ञानसिद्धिश्चेद्वाच्या तर्हि तन्निवर्तकं किमपि न स्यात् । तस्मात् केवलसाक्षिभास्यमज्ञानं स्वोपजीव्यसच्चिदंशौ ना ऽऽवृणुते । किं तर्हि तदाह

आनन्दांशाच्छादननिवृत्तौ तत्त्वमादिवाक्यं समर्थमित्यध्याहारः। आनन्दमाच्छादयतीव सम्यगविचारितत्वादिवशब्दप्रयोगः। तन्नाशने वाक्यविचारजन्यतत्त्वज्ञानेना ऽज्ञाननिवृत्तौ स्वप्रकाशानन्दाविर्भावः स्वत एवेत्यर्थः॥ तदुक्तमाचार्यैः।

प्रत्यग्बोधो य आभाति सो ऽद्वयानन्दलक्षणः।
अद्वयानन्दबोधश्च प्रत्यग्बोधैकलक्षणः॥
इदमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत्।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि॥
तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठत इति॥

अत उक्तं तन्नाशने तत्त्वमसीति वाक्यम्॥ ५२॥

अखण्डस्वरूपत्वे ऽप्यंशाच्छादने दृष्टान्तमाह—

यथा हिमांशुः खलु तैजसोऽयं
प्रकाशकत्वान्नहि तत्प्रकाशम्॥
उपाधिराच्छादयतीति दृष्टं
तदुष्णतांशः पिहितो ऽनुभूयते॥ ५३॥

अथेति। प्रकाशोष्णत्वं तेजः स्वरूपमखण्डं तत् तेज आप्यचन्द्रमण्डले प्रतिफलितं यदा भवति तदा उपाधिः चन्द्रमण्डलमुपहितस्य तेजसः उष्णत्वमाच्छादयति न प्रकाशं यथा तथा अज्ञानं सदंशं चिदंशं वा ऽऽच्छादयति किन्तु आनन्दांशमित्यर्थः॥ ५३॥

आवरणविक्षेपशक्तिं लक्षयति। तत्प्रसङ्गाद् विद्यामपि लक्षयति—

आविर्भावोत्पादकं यत् स्वरूप-

स्यैषा विद्या यत्तिरोधानमन्या ॥

विद्याविद्ये ते च जीवाश्रिते स्तो

नेशस्थे ते तस्य सर्वज्ञतायाः ॥ ५४ ॥

आविर्भावइति। स्वरूपस्य यदाऽऽविर्भावोत्पादकं सा विद्या यत् स्वरूपस्य तिरोधानं सा ऽन्या ऽऽवरणशक्तिरविद्येत्यर्थः। एते च विद्याविद्ये जीवाश्रिते नेशस्थे ते ईश्वरनिष्ठे न स्तस्तस्योपाधेः शुद्धसत्वप्राधान्येन वक्ष्यमाणस्य विक्षेपशक्त्याख्यमायारूपस्य सर्वकल्पनाधिष्ठानत्वेन सर्वानुस्यूतत्वाद् दीपवत् स्वसंम्बद्धसर्वावभासकत्वेन च सर्वज्ञत्वाद् हेतोरित्यर्थः। जीवोपाधेरविद्यायाः मलिनसत्वप्राधान्येन च सर्वज्ञत्वमतो विद्याविद्ये द्वे अपि जीवाश्रिते एवेति भावः ॥ ५४ ॥

विक्षेपशक्तिं लक्षयति—

कार्योत्पादे या समर्थाऽस्ति शक्ति-

र्विष्णो ज्ञेया नाम विक्षेपशक्तिः ॥

मानं वेदः प्राह शक्तिद्वयं तत्

सर्वानर्थप्राप्तिमूलं जनानाम् ॥ ५५ ॥

कार्येति ॥ विक्षेपशक्तिः लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेदित्याचार्योक्तेः। आवरणविक्षेपशक्तिद्वयं न स्वकपोलकल्पितं किन्तु श्रुतिमूलं नाऽतोऽत्राऽप्रामाण्यशङ्का कार्येत्यभिप्रायः। तथा च श्रुतिः ॥

नतं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।

नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥

इमाः प्रजाः यो जजान उत्पादयां बभूवेत्यनेन विक्षेपश-

क्तिरुक्ता । न तं विदाथ इति श्रुतिभागेनाऽऽवरणशक्तिर्जीवनिष्ठेत्युक्तम् । प्रजाजननसामर्थ्यादीशस्य सर्वज्ञत्वमर्थसिद्धम् । न ह्यसर्वज्ञो विचित्रं प्रपञ्चं रचयेदित्यर्थः ॥ ५५ ॥

एवं ज्ञानं समस्तं खलु धर्मिमात्र इत्याद्यारभ्य कार्योत्पाद इत्यन्तैः श्लोकैर्धर्मि ब्रह्मैव सत्यं तत्र प्रपञ्चः प्रकारीभूतो ऽनिर्वचनीयत्वादप्रामाणिक इति तत्पदार्थशोधनमनेन प्रकारेण कृतम् । अधुना प्रकारान्तरेण तदेवोच्यते—

भयं द्वितीयाद्भवतीति वेद-
स्तथा ऽभयं वै जनकेतिवेदः ॥
श्रुत्योर्विरोधे समुपस्थिते हि
पूर्वश्रुतेर्बाधमुदीरयामि ॥ ५६ ॥

भयमिति ॥ द्वितीयाद्वै भयं भवतीत्युक्त्वा बृहदारण्यकश्रुतिं द्वितीयां अभयं वै जनक प्राप्तोऽसीति तत्रत्यैव तयोरुभयोः श्रुत्योरितिविरोधः शेषं स्पष्टम् ॥ ५६ ॥

बोधप्रकारमाह त्रिभिः—

ब्रह्मैव सर्वं जगदित्यथैका
ह्यात्मैव सर्वं श्रुतिराह चान्या ॥
य एष सर्पस्तत्र रज्जुरेषा
यथा तथा वस्तुनिरूपणं तत् ॥ ५७ ॥
ब्रह्मातिरिक्तं न हि किञ्चिदन्य-
त्प्रतीयते वाक्यविचारणेन ॥

तथाऽनुभूतिश्च समाधिकाले
स्वात्मातिरिक्तं न हि भाति किञ्चित् ॥ २८ ॥

ब्रह्मेति ॥ स्पष्टार्थौ श्लोकौ ॥ ५७ ॥ ५८ ॥

प्रतीयते वाक्यार्थविचारेणेत्युक्तम् तत्र वाक्यार्थमाह—

ब्रह्मैवेदमिदं हि वाक्यमुदितं वेदे तदर्थस्त्वयं
सामानाधिकरण्यमत्र गदितं बाधो महासूरिभिः ॥
मुख्यार्थानुपपत्तिहेतुकतया गत्यन्तरादर्शनात्
यः सर्पस्तत्र रज्जुखण्डमिव तद्वेदान्तवाक्येष्वपि ॥५९॥

ब्रह्मैवेदमित्यादि ॥ ब्रह्मैवेदमिदं सर्वमिति वाक्ये ब्रह्मपदसर्वपदयोः सामानाधिकरण्यं नानैकविभक्तिकत्वे सति भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यं तन्मुख्यार्थानुपपत्तिहेतुकतया जडाजडयोरैक्यायोगात् मुख्यार्थासम्भवात् गत्यन्तरादर्शनाच्च यः सर्पस्तद्रज्जुखण्डमितिवद्बाधे सामानाधिकरण्यं यथा तथा ब्रह्मैवेदमित्यादिवेदान्तवाक्येष्वपीत्यर्थः । ननु नीलोत्पलमितिवत्सामानाधिकरण्यं मृद्घट इतिवद्वा सामानाधिकरण्यमत्राप्यास्त्वित्यत आह । गत्यन्तरादर्शनादिति । जडाजडयोः सर्वयोः ब्रह्मगुणगुणित्वासम्भवान्न नीलोत्पलमितिवत् सामानाधिकरण्यं नाऽपिमृद्घटइतिवद् ब्रह्मणो निरंशत्वेन विकाराभावात् तस्माद् बाधाख्यमेव सामानाधिकरण्यं युक्तमित्यर्थः । तथा च द्वितीयस्य बाधितत्वात् द्वितीयाद्वै भयं भवतीतिश्रुतेः । परमार्थिकश्रुत्या बाध इति भावः ॥ ५९ ॥

एवं श्रुतिप्रमाणेन बाधितत्वमुक्तं तत्राऽनुकूलमनुमानमाह—

यदज्ञानतो यत्समुत्पद्यते तद्-
मृषा वस्तु तज्ज्ञानतस्तस्य बाधः ॥
इति ख्यापितो ब्रह्मणो ऽन्यत्समस्तं
जगद् बाधितं रज्जुसर्पेण तुल्यम् ॥ ६० ॥

यदिति ॥ अत्राऽयम्प्रयोगः । विमतं जगद् बाधितमधिष्ठानादुत्पन्नत्वे सति तज्ज्ञानबाध्यत्वात् । यद्यधिष्ठानाज्ञानादुत्पद्यते तत्तदधिष्ठानज्ञानाद् बाधितं यथा रज्जुसर्पः। तदुक्तमाचार्यैः।

तावत् सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्नायते ब्रह्म सर्वाधिष्ठानमव्ययम् ॥ ६० ॥

अत्राऽर्थे स्वानुभवं प्रमाणयति—

ब्रह्माज्ञाने स्वाऽनुभूत्या ममाऽऽसीत्
तस्माज्जातं दृश्यजातं समस्तम् ॥
ब्रह्मज्ञानात्स्वानुभूत्या समस्तं
ब्रह्मण्येतद्बाधितं मे विभाति ॥ ६१ ॥

ब्रह्मेति ॥ जीवस्याऽनादित्वात् ममाऽऽसीदित्युक्तम् तदुक्तं साम्प्रदायिकैः ।

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादय इति ॥ ६१ ॥

ननु जगद् बाधितं मे विभातीत्युक्तम् । तत्र शुक्तिज्ञाने कल्पितरजतानवभासवत् जगदनवभास एवाऽस्त्वित्यत आह—

उपाधिनाशेन विना न चाऽस्य
सोपाधिकत्वात्प्रतिभासनाशः ॥

उपाधिनाशः खलु कर्मनाशा-
त्ततो ऽस्य सर्वः प्रतिभासनाशः ॥ ६२ ॥

उपाधिनाशेति ॥ विपर्ययो मिथ्याज्ञानं अतस्मिंस्तद्बुद्धिरिति यावत् । स च द्विविधः । सोपाधिको निरुपाधिकश्च । तत्र निरुपाधिको द्विविधः। बाह्य आभ्यन्तरश्च तत्र बाह्यः शुक्ताविदं रजतमित्यादि अहमज्ञो ब्रह्म न जानामीत्यादिराभ्यन्तरः । सोपाधिकोऽपि द्विविधः । पूर्ववत् । तत्र लोहितस्फटिक इत्यादि बाह्यः । आकाशादिप्रपञ्चोऽपि बाह्यः सोपाधिकः कर्माविद्याकार्यत्वात् । तत्वज्ञानिनोऽपि निवृत्तेऽप्यज्ञाने प्रारब्धक्षयपर्यन्तं प्रपञ्चस्योपलब्धिदर्शनाच्च कर्तृत्वादिभ्रम आभ्यन्तरः सोपाधिक इति । एवं स्थितौ प्रकृतेः प्रपञ्चस्य सोपाधिकत्वेन उपाधिनाशं विना प्रतिभासनाशो न भवति । उपाधिनाशः कस्माद् भवति उपाधिनाशोऽपि कुतो न इत्यत आह। कर्मनाशाद्भोगेन प्रारब्धकर्मनाशादुपाधिनाशो भवति ततोऽस्य जीवन्मुक्तस्य बाधितजगत्प्रतिभासनाश इत्यर्थः । तथा च बाधितं मे विभातीत्युक्तं युक्तमेवेति भावः । साम्प्रदायिकैरप्युक्तम् ।

शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चाऽपरोक्षात्।
प्रारब्धनाशात् प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया।

इति ।

लोहितः स्फटिक इत्यादिलौकिकेऽपि भ्रमे स्फटिकस्य प्रमाणान्तरेण शुक्लत्वे ज्ञातेऽपि उपाधेर्जपाकुसुमस्य यावत्सान्निध्यं तावल्लौहित्यं भासते सोपाधिकभ्रमत्वात् तद्वत्प्रकृतेऽपीति भावः ॥ ६२ ॥

श्रुतार्थापत्तिप्रमाणादपि जगद् बाधितमित्याह—

बाधस्यार्थापत्तितो दृश्यजातम्

ब्रह्मण्येतत्कल्पितं कल्पयामः ॥

नाऽयं सर्वो बाध एवं हि लोके

वेदे तावन्नेह नानेति बाधः ॥ ६३ ॥

बाधस्येति ॥ नेह नानाऽस्ति किञ्चनेति श्रुतौ बाधः श्रूयते तथा नेतिनेतीति बाधोऽपि श्रूयते तदन्यथानुपपत्त्या जगत्कल्पितमिति कल्पयाम इत्यर्थः ॥ ६३ ॥

बाधलक्षणमाह—

सोपाधिकं वा निरुपाधिकं वा

पूर्वं प्रतीतिर्यदिहाऽस्ति तस्य ॥

ज्ञानान्तरासत्त्वतया प्रतीतिः

स बाध इत्युक्त इह प्रवीणैः ॥ ६४ ॥

सोपाधिकमिति ॥ यथोक्तरीत्या सोपाधिकं निरुपाधिकं वा यत्पूर्वं प्रतीतं इह व्यवहारभूमौ यदस्ति तस्य प्रमाणजन्यज्ञानान्तरेण सत्वप्रतीतिर्बाध इह बाधनिरूपणप्रवीणैर्निपुणैर्बाध इति उक्त इत्यर्थः । तथा च श्रुतिः । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति । यथोक्तबाधलक्षणं श्रुतिमूलं ज्ञेयं नेदं स्वकपोलकल्पितमिति भावः ॥ ६४ ॥

प्रपञ्चमिथ्यात्वं चेन्न स्वीक्रियते तर्हि प्रपञ्चसत्यत्वादिनः पूर्वमीमांसकादीन् प्रति बाधकमाह—

सत्यं ज्ञानमनंतमेवमनिदानन्दं परं केवलं

सच्छुद्धं गुणविक्रियादिरहितं ब्रह्मेति चिन्हं यदा ॥

शुद्धं वेदविदा तदैव विदितो मिथ्याप्रपंचस्त्वयं
सत्यत्वे ह्युभयोर्न लक्षणमिदं व्यावर्त्तकाभावतः ॥६५॥

सत्यमिति ॥ ब्रह्मणः चिन्हं स्वरूपलक्षणं वेदविदा विदितं तदैव तस्मिन्नेव काले प्रपञ्चो मिथ्येति विदित इति सम्बन्धः । इति कथं तदाह । सत्यं कालत्रयबाधाभावोपलक्षितं स्वरूपं ज्ञानं ज्ञप्तिस्वरूपं अनन्तं त्रिविधपरिच्छेदशून्यम् । तदुक्तम् ।

न व्यापित्वाद्देशतो ऽन्तो नित्यत्वान्नापि कालतः ।
न वस्तुतो ऽपि सार्वात्म्यादानन्त्यं ब्रह्मण त्रिधेति ॥

अनिदं तादृगिदं ईदृगिदमिति व्यवहारायोग्यमनिदं तच्च तत् आनन्दं चेति द्वन्द्वैकवद्भावः । परमुत्कृष्टं अत एव केवल मेकं सत्सत्तामात्रम् । शुद्धं निर्मलमविद्यामलरहितं अत एव गुणविक्रियादिरहितं गुणाः सत्त्वरजस्तमांसि विक्रिया परिणाम आदिपदात् परिस्पन्द एभीरहितं ब्रह्मेति लक्षणं ज्ञातं तदैव प्रपञ्चमिथ्यात्वं सिद्धमित्यर्थः । कथं सिद्धं तदाह । उभयोः ब्रह्म प्रपञ्चयोः सत्यत्वे ब्रह्मलक्षणस्य व्यावर्त्तकाभावात् । ब्रह्मलक्षणमसिद्धं चेस्याच्छ्रुतेरन्मत्तप्रलपिता स्यात् । तच्चाऽनिष्टमतो लक्षणसिद्ध्यन्यथानुपपत्त्या प्रपञ्चमिथ्यात्वं सिध्यतीत्यर्थः। सत्यादिपदैः परमार्थत्वज्ञप्तित्वपूर्णत्वादिषु बोधितेषु सत्त्वर्थाद् अनृतजडपरिच्छिन्नत्वादिव्यावृत्तिः प्रतीयते पश्चाद्यादर्थो न चोदनार्थ इतिन्यायात् । अस्यार्थः । पश्चार्यादर्थापत्तिप्रमा णादर्थः सिध्यति न स चोदनार्थो न ■ शब्दार्थ इतिन्यायार्थः । यथा चष्येन मूषकादिना दूपितां भूमिमुपलभ्य तद्विरोधिनो घातकस्य मार्जारादेरभावो ऽर्थादवगम्यते तथा

सत्यादिपदात्पदार्थं परमार्थत्वादिकं प्रतीत्य पूर्वप्रतीतस्य परमार्थविरोधिनो ऽसत्यत्वादेरभावो ऽर्थापत्त्या ज्ञायते । न हि सत्यादेरसत्यादेश्चैकाधिकरणत्वं घटते तेन मानान्तरासिद्धत्वादन्यव्यावृत्तिरशब्दार्थेति न्यायाभिप्रायः । तथा चोक्तं वार्त्तिके

प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः ।

पश्चाद्भावं जानाति वध्यघातकवत्पदादिति ॥

तथा चाऽन्यव्यावर्त्तकाभावात् सत्यादि ब्रह्मलक्षणं नन सिद्ध्येदतः प्रपञ्चमिथ्यात्वमवश्यं स्वीकार्यमितिभावः । ब्रह्मणः सत्यज्ञानानन्दाः ब्रह्मणः स्वरूपलक्षणम्।स्वरूपं सद्व्यावर्तकं स्वरूपलक्षणम्।यथा खं छिद्रं द्रव्या आप इत्यादिस्वरूपलक्षणम्। स्वरूपमदितेरभ्यो व्यावर्तकत्वात्।तथा सत्यज्ञानानन्दाः ब्रह्मणः स्वरूपलक्षणम्।ननु लक्ष्यलक्षणभावस्य भेदगर्भत्वाद् ब्रह्मणोऽखण्डैकरसत्वेन कथं सत्यादेर्लक्षणत्वमिति चेन्न।कल्पनीयभेदाभ्युपगमेन तदुक्तम् । आनन्दो विषयो ऽनुभवो नित्यत्वं चेति सन्तो धर्माः ब्रह्मणो ऽपृथक्केऽपि पृथगिवाऽवभासन्त इति । न चाऽपृथक्के तेषां पृथक्त्वावभासः किम्प्रयुक्त इति वाच्यम् । अन्तःकरणधर्मोपाऽधिवशात् पृथगवभासोपपत्तेः । तथाहि ।बाधाभावविशिष्टं सत्यं वृत्त्यवच्छिन्नं चैतन्यं ज्ञानमित्यादि वृत्त्यवच्छिन्नं चैतन्यमानन्दः यद्वा व्यञ्जकवृत्त्युपहितं ज्ञानं अनुकूलवृत्त्युपहितं चैतन्यमानन्दः।ततस्तेषां ब्रह्मणश्च वास्तवभेदाभावे ऽप्यौपाधिकभेदसत्त्वाल्लक्ष्यलक्षणभाव उपपद्यते एवं च सत्यं ब्रह्मेत्युक्ते नैय्यायिकाभिमतसत्तासामान्ये ऽतिव्याप्तिः लक्षणस्य ब्रह्मणो जडत्वापत्तिश्च अत उक्तं ज्ञानमिति। ज्ञानं ब्रह्मेत्युक्ते पराभिमतात्मसमवेतज्ञाने ऽतिव्याप्तिर्लक्ष्यस्य ब्रह्मणो ऽनित्यत्वापुरुषार्थत्वमसङ्गाच्च तन्निरसनायोक्तमानन्दमिति । न चैवमप्यपुरुषार्थत्वाभावेऽपि

ब्रह्मणोऽनित्यत्वं दुष्परिहरमिति वाच्यं। सत्येतिविशेषणेन तत्परिहारसम्भवात्। आनन्दो ब्रह्मेत्युक्तौ विषयसुखेऽतिव्याप्तिर्लक्ष्यस्य जडत्वप्रसङ्गश्च तन्निवारणाय ज्ञानमित्युक्तम्। लक्षणाऽनित्यत्वपरिहाराय सत्यमित्युक्तम्। ननु सत्यज्ञानानन्दशब्दानां भिन्नार्थत्वेनाऽऽनन्दादिगुणकं ब्रह्मैव लक्षणवाक्ये न प्रतिपाद्यते ततश्च कथमखण्डैकरसत्वमिति चेन्नैवम्। सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेति व्यजानात् विज्ञानमानन्दं ब्रह्मेत्येवमादिवाक्येषु सत्यज्ञानानन्दादिशब्दानां सामानाधिकरण्येनाऽखण्डैकरसानन्दब्रह्मबोधकतया गुणगुणिभावकल्पनायां मानाभावात्। न च तेषामेकार्थप्रतिपादकत्वे सत्यादिपदानां पर्यायतापत्तिरिति वाच्यम्। प्रवृत्तिनिमित्तभेदाद्व्यावृत्तिनिमित्तभेदाच्च नोक्तदोषावकाशः।पर्यायो नामाऽनेकेषां शब्दानां यत्र प्रवृत्तिनिमित्तमेकम्।ते पर्यायशब्दाः। यथा ब्राह्मणविप्राद्याः शब्दाः पर्यायाः। एकस्यैव शब्दस्य यत्र प्रवृत्तिनिमित्तभेदस्ते शब्दाः नानार्थाः यथा हरिगोप्रमुखा इति विवेकः। न चैवमपि लोके वाक्यस्य संसर्गविशिष्टान्यतरप्रतिपादकत्वदर्शनेन कथमखण्डप्रतिपादकत्वमिति चेन्न। घटः सन्द्रव्यं पृथिवी प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यानां लोकेऽपि लक्षणया अखण्डव्यक्तिप्रतिपादकत्वदर्शनेन प्रकृतेऽपि तत्सम्भवात्। तत्र तावद्विशिष्टे शक्तानां पदानामखण्डचैतन्यभागलक्षणतया सत्यत्वादीनि पदानि अखण्डैकरसानन्दव्यक्तिं बोधयन्ति। न चैकपदेन तद्बोधसम्भवे पदान्तरवैयर्थ्यमिति वाच्यम्। पदस्य स्मारकत्वेन वाक्यस्यैवाऽनुभावकत्वात् पदान्तरसार्थक्यम्। अत्र ब्रह्मेति लक्ष्यपदम्। शेषाणि सत्यादीनि लक्षणसमर्थकानि। एतेषां च पदानां ब्रह्मपदेन प्रत्येकं प्रथमं सत्यं ब्रह्म ज्ञानं ब्रह्म ऽनन्तं ब्रह्माऽऽनन्दं ब्रह्म एवमान्वितानां पश्चात् सा-

मानाधिकरण्येन परस्परमपि सम्बन्धसिद्धिः । यथा ऽरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणातीत्यत्र क्रयवाचिपदानां परस्परमन्वयात् तथाऽत्रापीति बोध्यम् । एवं वेदविदा यथोक्तमार्गेण यदा ब्रह्मलक्षणं बुद्धं तदैव प्रपञ्चमिथ्यात्वसिद्धिः सम्पन्नेति । अतः परिच्छेदो न विद्यते यस्य तदनन्तं त्रिविधपरिच्छेदशून्यमित्यर्थः । तदुक्तम् ।

न व्यापित्वाद् देशतो ऽन्तो नित्यत्वान् नाऽपि कालतः ।
न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणस्त्रिधेति ॥ ६५॥

तात्त्विको ऽन्यथाभावः परिणामः अतात्त्विको ऽन्यथाभावो विवर्त इति परिणामविवर्तयोः केषांचिल्लक्षणम् । एवं च प्रकृतेः प्रपञ्चे विवर्तलक्षणसद्भावात् प्रपञ्चस्य विवर्त्तत्वं दर्शयति—

यथा रज्जुरग्रेऽन्यथा भाति पुंसां
यथा वस्त्वविज्ञानतस्तद्वदेव ॥
यथा वस्त्वविज्ञानतो ज्ञप्तिरेषाऽ
न्यथा भाति तस्याविवर्त्तः प्रपंचः ॥ ६६ ॥

तथेति । ज्ञप्तिः चैतन्यं चिद्विवर्त्तः प्रपञ्च इत्यर्थः ॥ शेषं स्पष्टम् ॥ ६६ ॥

अथ ब्रह्मणो ऽभिन्ननिमित्तोपादानत्वं दर्शयन् प्रपञ्चस्य तद्विवर्त्तत्वं दर्शयति—

यतो वा इमानीति वेदोक्तरीत्या
जगत्कारणं ब्रह्म कार्यं प्रपंचः ॥
लयस्य श्रुतेः कार्यमात्रस्य तस्मि—
न्नुपादानता ब्रह्मणो न्यायतश्च ॥ ६७ ॥

यतो वेति । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीति तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्युक्तरीत्या ब्रह्म जगत्कारणं तत्कार्यं प्रपञ्चः । जगत्कारणं ब्रह्मेत्युक्तमनेन निमित्तकारणत्वमात्रं प्रतीयते नोपादानत्वमत आह ॥ लयस्य श्रुतेरिति यत्प्रयन्त्यभिसंविशन्तीति श्रुतिभागेन उपादानकारणत्वमपि सिद्धं न्यायतो युक्तितश्च तत्सिद्धमित्यर्थः । उपादानकारणत्वं न हि कुलाले निमित्तकारणे घटादेर्लयो दृष्टः । तस्माल्लयश्रवणान्यथानुपपत्त्या ब्रह्माऽभिन्ननिमित्तोपादानमित्यर्थः ॥ ॥ ६७ ॥

ननु ब्रह्म चेदभिन्ननिमित्तोपादानं तर्हि ब्रह्मणः चिद्रूपत्वात् ततो जायमानं कार्यमपि चिद्रूपं स्यात् तत्तु न दृश्यते अतो नोपादानकारणत्वमित्यत आह—

विलक्षणाद्ब्रह्मण एव कार्य-
विलक्षणं जायत एव सर्वम् ॥
स्वप्नप्रपंचे परिदृष्टमेत-
दतो विवर्त्तः सकलः प्रपंचः ॥ ६८ ॥

विलक्षणादिति । विलक्षणादेव चिद्रूपादेव ब्रह्मणो विलक्षणमेव जडरूपमेव कार्यं जायते । इदं क्व दृष्टमित्यत आह ॥ स्वप्न इति चिद्रूपाज्जीव—

[ वालाग्रशतभागस्य शतधा कल्पितस्य च ।
जीवो भागः स विज्ञेयः स चाऽऽनन्त्याय कल्पते ॥ ]

—चैतन्याद् विलक्षणात् स्वप्नप्रपञ्चो गजतुरगादिजडरूपो विलक्षणो विवर्त्तो दृष्टः तद्वत् प्रकृते ऽपीत्यर्थः ॥ आत्मनि चैवं विचित्राश्चहीति सूत्रेण भगवतो बादरायणाचार्येण जीवचैत-

न्यस्य स्वप्नप्रपञ्चोपादानत्वमुक्तम् ॥ न च जीवचैतन्यस्य स्वप्नप्रपञ्चोपादानत्वे अहं गज इत्यादिप्रतीतिः स्यादिति वाच्यम्। स्वप्नभ्रमः तावज्जाग्रत्संस्कारजः श्रुत्यनुभवासिद्धः । संस्कारस्तु यादृशो ऽनुभवः तादृश एव। यद्यहं गज इत्यनुभवः स्यात् तर्ह्यहं गज इति संस्कारजन्यः स्वप्नः स्यान् न तादृशो ऽनुभवो ना ऽतो ऽहं गजइति स्वप्नप्रत्ययः।तस्माद् यथा स्वप्नप्रपञ्चे जीवचैतन्यविवर्त्तः तथा विलक्षणवाह्यप्रपञ्चाद् विलक्षणो ब्रह्मचैतन्यविवर्त्त इतिसिद्धम् । यतो वा इमानि भूतानीति श्रुत्या यज्जगत्कारणत्वमुक्तमिदमेव ब्रह्मणः तटस्थलक्षणम् । कादाचित्कत्वे सति व्यावर्तकत्वं उपलक्षणमित्युच्यते ॥ यथा काकवन्तो देवदत्तगृहाइति देवदत्तगृहलक्षणं तटस्थलक्षणं देवदत्तगृहे काकवत्वस्य कादाचित्कत्वं वर्त्तते इतरगृहेभ्यो व्यावर्तकत्वं च । सृष्टिस्थितिप्रलयकारणत्वं ब्रह्मणः तटस्थलक्षणम्। सृष्टिस्थितिप्रलयकारणत्वस्य कल्पितत्त्वात् कादाचित्कत्वं सजातीयाज्जीवाद् विजातीयादचेतनात् च व्यावर्तकत्त्वात् तटस्थलक्षणमिदम् । सृष्टिस्थितिप्रलयकारणत्वं ॥ सृष्टिरुत्पत्तिः स्थितिः पालनं कारणे कार्यस्य सूक्ष्मरूपेणावस्थानं लयः लयकारणत्वमित्युक्ते ब्रह्मण उपादानकारणत्वमेव स्यात् । यत् कार्यं यत्र लीयते तत्कार्यं प्रति तस्योपादानत्वनियमात् । निमित्तकारणमन्यदेव स्यात्।तथा चाऽद्वैतश्रुतिविरोधः स्यात् तदर्थमुक्तम् । स्थितीति । स्थितिलयकारणत्वमित्युक्ते उत्पत्तिकारणदण्डादीव निमित्तकारणमन्यदेव स्यात् तथा च पूर्वोक्तदोषः तद्व्यावृत्त्यर्थमुक्तम् सृष्टीति । सृष्टिस्थितिकारणत्वमित्युक्तेः कुलालादिवद्ब्रह्मणो निमित्तकारणत्वमेव स्यादुपादानकारणमन्यदेव स्यात् तथा च सिद्धान्तविरोधः।अत उक्तं लयेति। तदेवं सृष्टिस्थिति-

लयकारणत्वमित्युक्त्या ब्रह्मणो ऽभिन्ननिमित्तोपादानत्वं सिध्यति ॥ एवं प्रकृतिः च प्रतिज्ञादृष्टान्तानुपरोधादिति सिद्धान्तो न विरुध्यते । तथा च लक्षणस्या ऽयं निष्कर्षः । जगत्कर्तृत्वे सति जगदुपादानत्वं तटस्थलक्षणं ब्रह्मण इति । अत्राऽपि जगदुपादानत्वं तटस्थलक्षणमित्युक्ते मायायामतिव्याप्तिः मायाविशिष्टस्य जगदुपादानतया विशेषणीभूतमायाया अप्युपादानत्वाऽवश्यंभावात् कार्यान्वितस्यैव विशेषणत्वात् । मायां तु प्रकृतिं विद्यादित्यादिश्रुत्या मायाया उपादानत्वावगमात् च । तत्राऽतिव्याप्तिवारणाय जगत्कर्तृत्वे सतीत्युक्तम् । लक्षणस्य त्रीणि दूषणानि अव्याप्त्यतिव्याप्त्यसंभवाश्चेति । लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः । अलक्ष्ये लक्षणगमनमतिव्याप्तिः । लक्ष्ये मात्रवर्तनमसंभवः । ततश्चाऽतिव्याप्तेरपि दूषणत्वविशेषणमर्थवत् । कर्तृत्वं नाम उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्वं तच्च चैतन्यस्यैव सम्भवतीति न मायाया अतोनातिव्याप्तिः । जगत्कर्तृत्वमित्युक्ते नैयायिकाऽभिमततटस्थेश्वरेऽतिव्याप्तिः तस्य वेदान्तासंगतत्वेनालक्ष्यत्वात् तद्व्यावृत्त्यर्थमुत्तरदलं जगदुपादानत्वमिति । परमाण्वादिजगत्समवायिकारणमीश्वरो जगत्कर्तेति जगदुपादानत्वजगत्कर्त्रोर्नैय्यायिकैर्भेदाभ्युपगमादस्माभिरभिन्ननिमित्तोपादानत्वाङ्गीकारान् नातिव्याप्तिः । नन्वेकस्योपादानत्वं च कर्तृत्वं च विरुद्धं लोके तथाऽदर्शनात् न हि घटकर्ता कुलालो घटोपादानं घटोपादानभूतो मृत्पिण्डो वा घटकर्ता किन्तु मृत्पिण्ड उपादानं दृष्टविरोधापत्तेः दृष्टपूर्वकत्वाददृष्टकल्पनायाः । ननु वयं न कल्पयामः॥ तदैक्षत बहुस्यां प्रजायेयेति श्रुतिरेव बोधयतीति चेन् न । दृष्टविरोधे श्रुतेरर्थान्तरसम्भवात् तस्मादभिन्ननिमित्तोपादानत्वमनुपपन्नमिति प्राप्ते ब्रूमः । तदैक्षत बहुस्यां सो ऽकामयत बहुस्यां

प्रजायेयेत्यादिश्रुत्या तु बहुभवनकामयितृत्वश्रवणाच्चेतनस्य ब्रह्मण एवोपादानत्वं जगत्कर्तृत्वं चाऽवगम्यते । न च तद्बाधितुं युक्तं उपक्रमोपसंहारादितात्पर्यलिङ्गैरद्वितीये ब्रह्मणि वेदान्ततात्पर्ये निर्णीते सामान्यतोदृष्टानुमानेन श्रुत्यर्थबाधायोगात् । श्रुतिविरोधे प्रमाणान्तराणामाभासत्वात् । यदपि लोके दर्शनादुपादाननिमित्तयोर्भेदोऽभ्युपेयत इति।तदसद्।ऊर्णनाभ्यादेरभिन्ननिमित्तोपादानस्य दृष्टत्वात् । यथोर्णनाभिः सृजते गृह्णते चेति श्रुतेः । ऊर्णनाभिः स्वप्राधान्येन निमित्तं सोपाधिप्राधान्येनोपादानं च । तथा ब्रह्म स्वप्राधान्येन निमित्तं स्वमायोपाधिप्राधान्येनोपादानम्। तथा च प्रपञ्चो मायायाः परिणामो ब्रह्मणो विवर्त्त इति सिद्धम् ॥ ६८ ॥

किञ्च श्रुतिसिद्धं नामरूपातिरिक्तं प्रपञ्चस्य स्वरूपं नास्तीत्याह—

न नामरूपादपरं स्वरूपम्
कार्यप्रपंचस्य हरेर्विचारात ॥
मायेन्द्रजालादिभिरस्य तौल्यं
प्रतीयते स्वानुभवेन सम्यक् ॥ ६९ ॥

ननामेति । हरेरीश्वरस्य कार्यप्रपञ्चस्य विचारे क्रियमाणे सति नामरूपादपरं स्वरूपं न प्रतीयते । न केवलं श्रुति प्रमाणम्।किन्तु सम्यगसन्दिग्धाविपर्यस्ततया स्वानुभवेनाऽपि नामरूपान्नापरं रूपं प्रतीयत इत्यर्थः ॥ अनेन जीवेना ऽऽत्मना ऽनुप्रविश्य नामरूपे व्याकरवाणीति छान्दोग्ये । तदेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रीयत इति बृहदारण्यकश्रुतेश्च । तदुक्तमाचार्यैः ।

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमिति ।

अतो हेतोर्मायेन्द्रजालादि अस्य तौल्यं तुल्यत इत्यर्थः ॥ ६९ ॥

एवं जगद्रूपं नामरूपमात्रमुक्त्वा ब्रह्मस्वरूपमाह—

यस्मिन्नदोऽध्यस्ततया विभाति
त्यलुप्तदृक् तत्परमार्थवस्तु ॥
अन्तर्बहिर्यच्च सदैकरूपम्
नान्तर्बहिर्यस्य ततोऽन्यदार्तम् ॥ ७० ॥

यस्मिन्निति । यस्मिन् अदः जगद्यदा विभाति भासते । तदा अध्यस्ततयैव विभाति न स्वतः सत्तास्फुरणाभ्यामित्यर्थः । अत एवोक्तं वार्त्तिके ।

परमार्थमनालिंग्य न दृष्टं वितथं क्वचित् ।
अतो ऽयं वितथं सर्वं परमार्थैकनिष्ठितमिति ॥

यस्मिन्निदं विभाति तत्स्वरूपमाह । हि निश्चयेन अलुप्तदृक् न लुप्ता दृक् दृष्टिर्यस्य तदित्यर्थः ॥ न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेः । चेत्यपरम् । अन्तर्बहिश्च शरीरान्तर्बहिश्च देहलीदीपन्यायेन प्रकाशक बाधदेकरूपमित्यर्थः । अत एव सदा ऽव्यभिचारिरूपम्।यद्वा सदैकरूपं सर्वस्मिन् काले एकरूपं न परिणामीत्यर्थः । यस्य स्वत आकाशस्य वाऽन्तर्बहिश्च विभागो नाऽस्ति तत् परमार्थवस्तु त्रिकालाबाध्यं ब्रह्म ततो ऽन्यदार्तं बाधितमसत्यत्वादित्यर्थः ॥ ७० ॥

अध्यासलक्षणमाह—

परस्मिन्परस्यावभासोऽत्र सद्भिः
मृषाधीश्च विश्रान्तिरध्यासउक्तः ॥

गुडस्तिक्त इत्यादिकेऽयं प्रयोऽयोऽ
हमज्ञो न जानेऽद इत्यादिकेऽपि ॥ ७१ ॥

परस्मिन्निति। परस्मिन् अधिष्ठाने परस्या ऽवभासो मिथ्याज्ञानमध्यास उक्तः। अध्यासस्यैव मृषाधीर्मिथ्याज्ञानं भ्रान्तिरित्यादिपर्याया ज्ञेयाः। लक्ष्ये लक्षणं वर्तयति। गुडस्तिक्त इत्यादिना गुडेऽधिष्ठाने तिक्तस्या ऽवभासो मिथ्याज्ञानं तथाऽहमज्ञो मन्दो न जाने। तत्राऽहं अस्मच्छब्दस्याऽवलम्बनतया साक्षी चिद्रूपः तस्मिन् अज्ञत्वं मिथ्याज्ञानमध्यासो ज्ञेयः। अज्ञानावभासके अज्ञत्वप्रतीतिरयं कारणाध्यासो ऽहमदो घटादिकं न जाने अयं कार्याध्यास एवं योज्य इत्यर्थः ॥ ७१ ॥

नन्वध्यासो गुडः तिक्त इत्यादिके गुडतिक्तयोः परस्पराध्यासतत्वा स्वीकार्या ऽन्यथेतरप्रतीतिरेव न स्यात्। तस्मात् परस्पराऽध्यासो ऽङ्गीकर्त्तव्य इत्यागतम्। तथा च चैतन्ये प्रपञ्चो ऽध्यस्तः प्रपञ्चे चैतन्यमिति परस्पराध्यासे सम्यग्ज्ञानेना ऽध्यस्तयोर्निवृत्तौ शून्यवादः प्राप्तः तत्र समाधानमाह—

सत्यानृतात्मं मिथुनं परस्परम्
अध्यस्तमेतत्प्रतिभाति विभ्रमे ॥
सम्यक् प्रबोधादनृतस्य पीडनात्
सत्यस्य शेषान्नहि शून्यता द्वयोः ॥ ७२ ॥

सत्येति। अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकमिदं सत्याऽनृतात्मकं मिथुनं विभ्रमे भ्रान्तौ परस्पराध्यस्तमेतद्विभाति। तथा हि। अस्ति घटो भाति घटः प्रियो घट इत्यादिव्यवहारे सत्तास्फुरत्ताप्रियताः घटादयःपरस्पराध्यस्तप्रावि-

भान्ति। सत्तायां घटः घटे सत्ता, भाने घटो घटे च भानं, प्रियतायां घटो घटे च प्रियता। तत्र सत्तास्फूर्ती प्रसिद्धे। प्रियता ह्यनुकूलवेदनीयता। एवं परस्पराध्यस्ततयैव भान्ति। एकतराध्यासाङ्गीकारे अपरस्य स्फुरणं न स्यादतः परस्पराध्यासोऽङ्गीकर्तव्य इत्यर्थः। ननु परस्पराध्यासाङ्गीकारे सम्यक्ज्ञानेनोभयस्य बाधाच्छून्यवादः प्रसज्यत इत्यत आह। सम्यगिति। अधिष्ठानसम्यक्ज्ञानेनाऽनृतस्य बाधो योग्यत्वात्। सत्यस्य बाधावधित्वेन बाधायोग्यत्वात् सत्यस्य शेषात् न शून्यवादः। यद्युभयमनृतं स्यात् तदा शून्यवादो वक्तव्यः। न चैवम्। तथा सति सम्यक्ज्ञानेनाऽनृतस्यैव बाधो न सत्यस्य तेन च नशून्यवादइति भावः॥७२॥

पूर्वं नामरूपत्वात् प्रपञ्चस्य मिथ्यात्वमुक्तं तदन्तर्गतक्रियायाः मिथ्यात्वं नोक्तमतः तस्यापि मिथ्यात्वकथनाय सप्तान्नब्राह्मणोक्तमर्थमाह—

व्यवहरति जीवो नामरूपक्रियाभिः
न परिगणितसप्तान्नेषु मध्ये त्रिभिरेतैः॥
परिपतति ततोऽधश्चोर्ध्वमायाति तूर्णम्
भ्रमति च बहु चास्मादिन्द्रजालं किमन्यत्॥७३॥

व्यवहरतीति। बृहदारण्यके सप्तान्नब्राह्मणे श्रूयते। यत् सप्तान्नानि मेधया तपसाऽजनयत्पिता एकमस्य साधारणं द्वे देवानभाजयत्त्रीण्यात्मने कुरुते पशुभ्य एकं प्रायच्छदिति। तत्र त्रीण्यात्मने कुरुते इत्युक्तं तानि कानीति स्वयमेव व्याख्यानेन दर्शयति श्रुतिः 'मनो वाचं प्राणानात्मने कुरुत इति'। अत्र मनः शब्देन रूपमुच्यते वाक्शब्देन वागिन्द्रियं निष्पाद्यं नाम। प्राणशब्देन क्रियायाः प्राणसाध्यत्वात् क्रियेत्युच्यत इति।

एकं व्रीहियवाद्यन्नं सर्वसाधारणं तु तत् ।
द्वे दर्शपूर्णमासाख्ये देवानामेव ते मते ॥
क्षीरमेकं पशूनां तन् मनोवाक्प्राणरूपकम् ।
अन्नत्रयं चिदात्मार्थं तेन व्यवहरत्ययम् ॥
अनेन मनसा रूपमपञ्चो ऽत्रोपलक्ष्यते ।
वागिन्द्रियेण निष्पाद्यं नाम वागिह कथ्यते ॥
पञ्चवृत्त्यात्मकात् प्राणादिह कर्मोपलक्ष्यते ।
नामरूपक्रिया एवमध्यात्मं रूपवर्णितम् ।
ब्रह्मादि स्थावरान्तं यत् तज्जगत्त्रयमेव हि ॥
नाम रूपं कर्म चेति नाऽस्ति वस्त्वन्तरं कचित् ।

एवं सति परिगणितमहान्नेषु मध्ये नामरूपक्रियाभि-स्त्रिभिस्तैर्मनआदिभि मिथ्याभूतैर्जीवो व्यवहरति । ततो नामरूपक्रियान्नव्यवहारात् पतति । नरक इति शेषः ।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा इति ॥

गीतोक्तेः । तस्मान्नामरूपक्रियात्मकं जगन्मृषेति । तूर्णं चोर्ध्वं स्वर्गं चाऽऽयाति चेत्यपरं बहु तिर्यगादिषु योनिषु भ्रमति। अस्मादन्यत्किमिन्द्रजालं व्यलीकत्वादिदमेवेन्द्रजालमित्यर्थः सिद्धः ॥ ७३ ॥

ननु प्रपञ्चो वारं वारं मृषेत्येवमुद्घोष्यते तत्र कुतो न सर्वजनस्य मिथ्यात्वबुद्धिरत आह—

उपादानचिद् व्याप्तमन्तर्बहिर्वा
जडं मायिकं भाति कार्यं समस्तम् ॥
मृषात्वेऽपि सत्यत्वधीरज्ञजातेः

गुरोः शिक्षितस्यैवमिथ्यात्वसिद्धिः ॥ ७४ ॥

उपादानचिति ॥ जडं मायिकं कार्यं समस्तमन्तः शरीरे वहिश्च यज्ज्ञाति तदुपादानचिद्व्याप्तमेव भाति भासते। कार्यंकारणव्याप्तमेव भासते मृद्घटादौ तथा दृष्टत्वान्न कारणातिरिक्तं कार्यम्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः। गुरुणैवं शिक्षितत्वाभावान्मूढजातेः प्रपञ्चे सत्यत्वबुद्धिः। गुरोः शिक्षितस्यैव पुंसः प्रपञ्चे मिथ्यात्वसिद्धिर्नातः सर्वजनस्येत्यर्थः ॥ ७४ ॥

उपादानकार्ययोर्वैलक्षण्यात्सत्यत्वमिथ्यात्वनिर्णयमाह—

उपादानचिद्यादृशीतादृगेवाऽ

न्यथाऽन्ते विभाति स्वरूपात्कदापि ॥

अतः सत्यता स्याज्जडं कार्यजातम्

विभात्येव नानाप्रकारं मृषा तद् ॥ ७५ ॥

उपादानेति ॥ उपादानचैतन्यमेकरसत्वात्कदाप्यन्यथा न भाति। जडं प्रपञ्चरूपं कार्यजातं तु त्रिगुणकार्यत्वादनेकरसत्वान्मृषैव तदित्यर्थः। तदुक्तम्।

सकृत्प्रमित्वरूपाद्यद्रूपमन्यत्कथञ्चन।
नैव प्रपद्यते सत्वं तत्स्यात्कार्यविलक्षणमिति ॥ ७५ ॥

अधिष्ठानसम्यक्ज्ञाने सति तद्विवर्तः प्रपञ्चस्तदतिरिक्तो नास्तीति दृष्टान्तपूर्वकमाह—

यथा वस्तुविज्ञानतश्चिद्विवर्तः

प्रपञ्चः समस्तोऽपि चित्कार्यमेव ॥

यथारज्जुसम्यग्दृशा रज्जुमात्रम्

भुजङ्गादिकल्पं ततोनान्यदस्ति ॥ ७६ ॥

यथेति ॥ कल्पितस्य पृथक्सत्ताविरहेणाधिष्ठानानातिरेका-दधिष्ठानमात्रत्वमित्यर्थः ॥ ७६ ॥

किञ्च—

प्रपञ्चसत्यत्वनिरूपणेन
न ब्रह्मशब्दार्थनिरूपणं स्यात् ॥
इयत्तयान्यस्य जडस्य भानात्
बृहत्वमर्थो न घटेत धातोः ॥ ७७ ॥

पप्रञ्चेति । बृहत्वाद् बृंहणत्वाद् ब्रह्मेतिशब्दार्थो न घटत-इत्यर्थः । तदुक्तं वार्त्तिके ।

अव्यावृत्तानानुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभोऽत्र स्याद्वितीये सति वस्तुनीति ॥ ७७ ॥

उपादानसमसत्ताकोऽन्यथाभावः परिणामः उपादानविष-मसत्ताकोऽन्यथाभावो विवर्त्त इति परिणामविवर्त्तयोः पूर्वाऽपेक्षया लक्षणानन्तरं केचिद्वदन्ति तदपि दर्शयति—

समानसत्ताकतयाऽन्यथात्वात्
अज्ञानकार्यं परिणामसंज्ञम् ॥
ब्रह्मान्यसत्ताकतयाऽन्यथात्वात्
तत्कार्यजातं हि विवर्त्तसंज्ञम् ॥ ७८ ॥

समानसत्ताकतयेति ॥ तत्कार्यजातं ब्रह्मकार्यजातमि-त्यर्थः । मृद्घटयोरिव मायातत्कार्ययोरेकसत्ताकत्वात्समानसत्ता-कत्वात्समानसत्ताकत्वमित्यर्थः । ब्रह्मतत्कार्ययोर्विषमसत्ताक-

त्वादन्यथाभावो विवर्तः।ब्रह्मसत्ताया आवृतत्वात्तदज्ञातसत्ताकत्वं नास्ति किन्तु ज्ञातसत्ताकत्वमेव। अतो ब्रह्मविवर्तप्रपञ्च इत्यर्थः। तुच्छस्याऽयं स्वभावो. यावद्भासते तावदेव तस्य सत्ताऽन्यथा नास्तीतिभावः ॥ ७८ ॥

वेदान्तनये कारणान्न कार्यं भिन्नम् । वाचारम्भणं नाम विकारो नामधेयं मृत्तिकेत्येव सत्यमितिश्रुतेः । ये तु कारणात्कार्यं भिन्नं वदन्ति तन्मतं न युक्तं दोषदुष्टत्वादित्याह—

ये कारणात्कार्यमिदं विभिन्नम्
वदन्ति तेषां न मतं विशुद्धम् ॥
ये तन्तवः स्युस्तुलितास्तु तज्ज-
पटे गुरुत्वं द्विगुणं कुतो न ॥ ७९ ॥

येकारणादिति । स्पष्टार्थः ॥ ७९ ॥

यावत्प्रारब्धद्वैतं प्रपश्यन्नपि भजद्यादित्याह—

अधिष्ठानचैतन्यविज्ञानसिद्धौ
प्रपश्यन्नपि द्वैतमेतत्प्रजह्यात् ॥
प्रहाणं तदेवात्र यद्बाधितस्या-
द्युपेक्षा न पाषाणवद्दूरहानम् ॥ ८० ॥

अधिष्ठानेति ॥ यावत्प्रारब्धद्वैतं प्रपश्यन्नपि भजद्यात् कथं तदित्याह। यद्बाधितत्वात्प्रवृत्त्यविषयत्वेनोपेक्षा तदेवास्य प्रहाणमित्यर्थः। तदुक्तमाचार्यैः।

उपेक्षा नामरूपे द्वे सच्चिदानन्दवस्तुनि ।
समाधिं सर्वदा कुर्याद्धृदये वा ऽथ वा बहिरिति ॥ ८० ॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चम्प्रपञ्च्यते ।

इति साम्प्रदायिकोक्तेरधिष्ठाने भ्रान्त्या प्रतीतस्याऽधिष्ठानमात्रशेषत्वमपवाद इत्यपवादलक्षणं लक्ष्ये दर्शयन् तद्बोधेन स्वस्य कृतार्थतां दर्शयति ।

अधिष्ठानचैतन्यसिंधोर्लहर्यः
प्रपञ्चात्मिकाः कल्पिता भ्रान्तिमात्रात् ॥
अधिष्ठानबोधाद्वयं तन्निरासाद्
अधिष्ठानमात्रस्य शेषात्कृतार्थाः ॥ ८१ ॥

अधिष्ठानेति । स्पष्टार्थः ॥ ८१ ॥

इदानीं मिथ्यात्वं लक्षयति—

यस्याऽत्यंताभाव एवास्ति यस्मि-
स्तस्याऽ ज्ञानात्तत्र यद्भाति मिथ्या ॥
रज्जौ सर्पस्तैजसे तत्प्रपञ्चो
ब्रह्मण्येवं भाति विश्वं मृषैव ॥ ८२ ॥

यस्येति ॥ स्पष्टार्थः ॥ ८२ ॥

प्रपञ्चमिथ्यात्वबुद्धिः कुतो न भवतीत्यत्र हेतुमाह—

प्रातीतिकं यद्व्यवहारकाले
संबाध्यते प्रायश एव लोकैः ॥
ब्रह्मात्मबुद्धिं न विना प्रपञ्चः
संबाध्यतेऽतोऽत्र यथार्थबुद्धिः ॥ ८३ ॥

प्रातीतिकमिति ॥ व्यवहारकाले गमनादिव्यवहारकाले

आगन्तुकदोषजन्यं प्रातीतिकं शुक्तिरजतादि सामग्रिवशाद्बाध्यत एवं व्यावहारिकः प्रपञ्चो ब्रह्मात्मबुद्धिं ब्रह्मात्मज्ञानं विना न सम्बाध्यते तस्य तदेकनिवर्त्यत्वात्। सा चाऽनेकजन्मार्जितपुण्यसञ्चयं विना न भवत्यतोऽत्र प्रपञ्चे यथार्थबुद्धिः मूढानामित्यर्थः ॥ ८३ ॥

उक्तमर्थं विनिगमयति—

अलं बहूक्तेन बहुप्रकारैः
सर्वज्ञनारायणवेदवाक्यम् ॥
वाचारम्भेत्यादि तस्माद्व्यलीकम्
दृश्यं सत्यं ब्रह्मसिद्धान्त एषः ॥ ८४ ॥

अलमिति ॥ बहुप्रकारैः बहुत्वेन तर्केणाऽलम्पूर्यतां तर्कतां तर्कस्याऽनन्तत्वादित्यर्थः । कथं तर्हि सिद्धान्तसिद्धिरत आह सर्वज्ञनारायणानिर्मितवाक्यं 'वाचारम्भणं नाम विकारो नामधेयं मृत्तिकेत्येव सत्यं' स्वतः प्रमाणं तस्मादाधिष्ठानं ब्रह्मैव सत्यं कल्पितं दृश्यं व्यलीकं मिथ्यैवेति सिद्धान्तः। तर्कस्तु मानानुग्राहकत्वादुपयोक्ष्यते न तु स्वतः प्रमाणमतोऽलमित्यर्थः । एवं च प्रागुक्तम्। द्रष्टुः किं स्वरूपं च दृश्यस्य किं चेत्यदोऽन्द्वयं सं विचार्य मुमुक्षोरित्युक्तम् । तत्र द्रष्टृरूपं ब्रह्म सत्यं दृश्यप्रपञ्चो मिथ्येतिनिश्चयः । तथा च संशयविरोधिनिश्चयेन पुनः संशयानुदयः संपन्नः स्वस्येयमेव कृतार्थतेति भावः ॥ ८४ ॥

कृतेऽपि सिद्धान्ते सिंहावलोकितन्यायेन पुनराह—

जीवा नियम्या भगवान्नियन्ता
तत्प्रेरको व्यापक एष हृत्स्थः ॥

इत्यादि शास्त्रं बहु तावदेव

ब्रह्मात्मभानं न हि यावदस्ति ॥ ८५ ॥

जीवेति । यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरोऽयं न पृथिवी वेद पृथिवी यस्य शरीरं पृथिव्या अन्तरोऽयमेभ्यो लोकेभ्यो यमयत्येव तं आत्मान्तर्याम्यमृत इत्यादि शास्त्रं ईश्वरस्यान्तर्यामिणो नियामकत्वे जीवस्य च नियम्यत्वे प्रमाणम् । एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एषासाधु कर्म कारयति तं लोकेभ्यो यमेभ्यो ऽधो निनीषते इत्यादि श्रुतेः । स्मृतिश्च ।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।

ईश्वरप्रेरितोगच्छेत्स्वर्गं वा श्वभ्रमेव वेति ॥

कर्तृकारयितृत्वे प्रेर्यप्रेरकत्वे प्रमाणं शास्त्रम् ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायपेत्यादि ।

शास्त्रं भ्राम्यभ्रामकत्वे प्रमाणम् । सर्वमेतदन्यच्च शास्त्रं तावदेव बहु तावदेव यावदहं ब्रह्मास्मीतिबुद्धिर्नास्ति तावत्पर्यन्तमेवेत्यर्थः । तत्प्रभायां ब्रह्मात्मबुद्धौ भेदबुद्धेर्निवृत्तत्वात्कः कस्य नियन्ता कः कस्य नियम्यो वा स्यात् । " यत्र त्वस्य सर्वमात्मैवाभूत् य इदं सर्वं भवतीत्यादिश्रुतिभ्य इति भावः । इदं सृष्टिस्थितिप्रलयप्रवेशवाक्यानामुपलक्षणं एतेषामर्थवादकत्वेन स्वार्थे तात्पर्याभावात् । तर्हि किं तानि किमितीश्वरेण निर्मितानीति चेद् अध्यारोपव्युत्पत्त्यर्थमिति ब्रूम इति । तानि कानि वाक्यानि कथं वा तेषां स्वार्थे तात्पर्याभाव इति चेदुच्यते ।"तत्र यतो वा इमानि भूतानि जायन्ते येन जातानि

यत्प्रयन्त्यभिसंविशन्तीति " सृष्टिस्थितिप्रलयवाक्यान्येवमन्यान्यपि । तत्र सृष्टिर्नाम उत्पत्तिः सा न सम्भवति ।

नाऽसतो विद्यते भाव इति स्मरणात् ।

असत उत्पत्त्यसम्भवात् तत्र श्रुतितात्पर्यं न सम्भवति स्थितिकालेऽप्यसत्त्वादेव तत्र सम्भवति। एवं प्रलयोऽपि न सम्भवति तस्योभयाधीनत्वात् । " आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेति " स्मरणात् । "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" " स एष इह प्रविष्ट आनखाग्रेभ्य इत्यादि " प्रवेशवाक्यानि । तत्र प्रवेशो नाम प्रतिबिम्बासिद्धान्ततः स च स्वरूपेण मृषैव । अतः प्रवेशवाक्यानामपि स्वार्थे न तात्पर्यमेवमूह्यम् ॥ ८५ ॥

"इदानीं भयं द्वितीयाद्भवतीति वेद" इत्यादिना श्लोकेनोक्तं तदुपसंहरति—

एवं श्रुतिन्यायविचारणेन
द्वितीयमेतन्न कुतो भयं स्यात् ॥
अतोऽभयं वै जनकेति वाक्या-
यद्भीतिहीनं मम तत्स्वरूपम् ॥ ८६ ॥

एवमिति ॥ स्पष्टार्थः ॥ ८६ ॥

यः कर्तुमकर्तुमन्यथाकर्तुमीश्वरः कालचक्रप्रयोक्ता तस्मात्कालचक्रादपि मे भयं नाऽस्तीति सहेतुकमाह—

यद्द्वादशारं किल कालचक्रम्
निर्णाभि यच्चाप्यजरं परिभ्रमत् ॥
गोपालकृष्णस्य करस्थितं य-
त्स एव कृष्णोऽस्मि कुतो भयं ततः ॥ ८७ ॥

यदिति ॥ किल इति वेदे श्रूयते द्वादशमासाश्चैत्रादयो यस्याऽराकोणाः किलास्त्रीणि चातुर्मास्यानि यस्य नाभयः यश्चाऽजरं सर्वदैव नूतनमपि च परिभ्रमणनिमेषादिवत्सरान्तस्वरूपेण परितो भ्रमत्प्रयोक्तुः श्रीगोपालकृष्णस्य करस्थितं प्रयोक्तुरधीनं स प्रयोक्ता कृष्णः ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥

इति निरुक्तेः । स कृष्णोऽहमविद्यानिवृत्त्याऽस्मि । एवं च सति ततः कालचक्रादतिघोरान्मम कुतो भयं। नास्ति भयमित्यर्थः । मद्व्यतिरिक्तस्याभावादित्यर्थः ॥ ८७ ॥

भीतिस्वरूपं वदन् तत्कृतोहं बिभेमीति प्रत्ययो भ्रान्तिरित्याह—

भीतिर्मनोवृत्तिरियं द्वितीया-
दुत्पद्यते चेतसि तद्विकारः ॥
आरोप्य तामात्मनि निर्भयेऽपि
बिभेम्यहं भ्रान्तिरियं मृषैव ॥ ८८ ॥

भीतिरिति ॥ "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीः एतत्सर्वं मन एवेति" श्रुतेः।मे मनसि भयमुत्पन्नमिति प्रत्ययाच्च भीतिर्मनोवृत्तिः। इयं द्वितीयाद्भयहेतोश्चेतसि उत्पद्यतेऽतो सौ तद्विकारश्चेतःपरिणामो राजसः। एतादृशीं भीतिं निर्भये प्रत्यगात्मन्यारोप्याऽहं बिभेमीति । भ्रान्तिः।अयोदहतीतिवत् अतस्मिन् तद्बुद्धिर्मृषैवेत्यर्थः । उक्तं च भागवते । "भयं द्वितीयाभिनिवेशतः स्यादिति" ॥ ८८ ॥

एवं तावज्ज्ञानं समस्तं खलु धर्ममात्र इत्यारभ्य भीतिर्म-

नोत्पत्तिरित्यन्तैः श्लोकैस्तत्पदार्थशोधनं कृतम् अधुना त्वम्पदार्थशोधनं वाक्यार्थज्ञानोपयोगितया क्रियते—

नाहं स्थूलं सप्तधातुस्वरूपम्
विष्ठाभाण्डं प्रस्रवच्छिद्रसद्म ॥
इत्यादेर्मूलं सर्ववर्णाश्रमाणाम्
तादात्म्यं मे तेन नो द्रष्टृभावात् ॥ ८९ ॥

नाहमिति ॥ अहमस्मत्प्रत्ययशब्दयोरालम्बनीभूतः प्रत्यगात्माऽहं पञ्चीकृतपञ्चमहाभूतकार्यं कर्मजं स्थूलशरीरं न भवामीतिशेषः । अहं शरीरमिति प्रत्ययाभावात्तद्गतस्थूलत्वादिधर्मेणैव देहाध्यासोऽत उक्तं नाऽहं स्थूलमिति । पञ्चीकरणं त्वाकाशादिपञ्चसूक्ष्मभूतानि प्रत्येकं द्विधा विभज्य पुनरपि तत्प्राथमिकान्भागान्प्रत्येकं चतुर्धाविभज्य तेषां भागानां इतरचतुरक्षे स्वं स्वं भागं विहाय संयोजनं । एतदीश्वरकर्तृकमित्याकरे विस्तरः। पञ्चीकृतपञ्चमहाभूतकार्यत्वं काष्ठकुड्यादेरप्यस्ति ततोऽतिनिकृष्टं शरीरमित्याह । सप्तधातुस्वरूपं रुधिरमांसमेदःस्नाय्वस्थिमज्जाशुक्रेतिसप्तधातुमात्रं विष्ठाभाण्डम् । सर्वानुभवसिद्धमेतत् । प्रकर्षेण स्रवन्ति छिद्राणि यस्य तत्तथा । तत्राऽधो द्वे सप्त मुखे । इत्यादेरन्नं " अद्यते इति च भूतानि तस्मादन्नं तदुच्यत " इति श्रुतेः अन्नमन्नमयकोशत्वात् । सर्वे च ते वर्णाश्चाश्रमाश्च तेषां मूलं निदानम् । स्थूलदेहनिबन्धना एव सर्वे वर्णाश्रमधर्माः 'ब्राह्मणो जातो मृत' इतिब्राह्मणवर्णत्वदेहस्यैव तथाऽऽश्रमा ब्रह्मचर्यादयो 'ऽष्टमे वर्षे ब्राह्मणमुपनयेदित्यादि" कल्पवचनेभ्यः । अत एवोक्तम् । हस्तामलकाचार्यैः ।

नाऽहं मनुष्यो न च देवयक्षो

न ब्राह्मणः क्षत्रियवैश्यशूद्रः ।
न ब्रह्मचारी न गृही वनस्थो-
भिक्षुर्न चाऽहं निजबोधरूप इति ॥
आचार्यैरप्युक्तम्,
न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयोहं ममध्यासहानात्
तदेकोऽवशिष्टः शिवः केवलोऽहमिति ॥

एवम्भूतेन देहेन मे तादात्म्यं ऐक्यं न, तत्र हेतुमाह । द्रष्टृभावाद्द्रष्टृत्वादित्यर्थः । द्रष्टा दृश्याद्भिन्न इति सिद्धम् अतो न स्थूलदेहतादात्म्यं प्रत्यगात्मना सह घटत इति भावः ॥ ८९ ॥

एवं षण्ढत्वादयोऽपि देहस्यैवेत्याह—

नाऽहं षण्ढो नैव योषित्पुमान्वा
नाहं बालो नैव वृद्धो युवा वा ॥
देहस्यैतेऽध्यासतो भान्ति भावाः
प्रत्यक्तत्वे पूर्ण एवाधुनाहम् ॥ ९० ॥

नाहमिति ॥ एतेषां षंढादयो भावाः देहस्यैव देहावच्छिन्ने प्रत्यक्षे प्रत्यगात्मनि मूढानामविवेकाध्यासतो भान्ति । विवेकादहं पूर्ण एवाऽधुना विवेककाले ऽस्मीत्यर्थः । षंढादित्वे बीजमाह श्रुतिः "पितूरेतोऽतिरेकात्पुरुषो मातूरेतोऽतिरेकात्स्त्री । उभयोर्बीजतुल्यत्वान्नपुंसकं व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामनकाः भवन्त्यन्योन्यवायुपरिपीडितशुक्रद्वैविध्याद्द्विविधा तनुः स्यात् तनुयुग्माः प्रजायन्त इति"।तत्रषंढत्वादयो ऽत्रसमयोपादानत्वात् तत्रबालत्वादयः परिणामशक्तिरूपकाल-

कृता इति विवेकः ॥ ९० ॥

इदानीं देहेऽहंमतिरप्यविवेकनिबन्धनैवेत्याह—

आत्मच्छाया व्याप्तबुद्धेः प्रवेशा-
त्स्थूले देहेऽहंमतिः साऽविवेकात् ॥
सर्वानर्थप्राप्तिबीजं नराणाम्
भ्रान्तिश्चैषा साऽधुना मे न चाऽस्ति ॥ ९१ ॥

आत्मच्छायेति ॥ आत्मनः प्रतीचः छाया आभासस्तेन व्याप्ता या बुद्धिस्तस्यास्स्थूले देहे स्थूलभोगार्थं प्रवेशं प्रतिफलनं भवति यदा तदा देहेऽहंमतिरुदेति । जाग्रत्काले सा चाऽविवेकाद्विवेकाभावादात्मच्छायाव्याप्तबुद्धिनिबन्धनात्तदभावे सुषुप्तौ नैवेत्यविवेकाद्भवति सा देहेऽहंमतिरित्यर्थः। अत एवैषा भ्रान्तिरतस्मिंस्तद्बुद्धिः । तदुक्तं "चिच्छायावेशतो भानं धीरित्यादि" सा सुखेनैवाऽस्तु किं तयेत्यत आह । सर्वानर्थप्राप्तिबीजं नहीदं देहेऽहङ्कारं विना कोऽपि किञ्चित्करोत्यतः तस्या उच्छेदेऽतियत्नो विधेय इति भावः । कियनेन परोपदेशपाण्डित्येनेत्यत आह । सा अविवेकनिबन्धना देहेऽहंमति र्मम विवेकात् गुरुशास्त्रप्रसादादधुना तदनुग्रहसमये नास्तीति तस्मात्सर्वानर्थोच्छेदकदेहाहङ्कारविवेकसिध्यै गुरुशास्त्रप्रसाद एव सम्पादनीय इति भावः । तस्मात् सर्वानर्थमूलं सा अविवेकनिबन्धना एषा मम विवेकादधुना नास्तीत्यर्थः । उक्तं च ।

चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता ।
एकाहंकृतिरूपा स्यादन्तःकरणरूपिणीति ॥
भानं विशेषतो भानमित्यर्थः ॥ ९१ ॥

यथा देहेऽहंमतिः भ्रान्तिस्तथा देहे ममत्वप्रतीतिरपि भ्रा-

न्तिरेवेत्याह—

पष्ठ्यर्थस्याऽसंगतेरत्यसंगे
यस्माद्देहे या ममत्वप्रतीतिः ॥
भ्रान्तिश्चैषा साऽविवेकेन सिद्धा
निःसङ्गत्वात्साऽधुना मे न चास्ति ॥ ९२ ॥

षष्ठीति ॥ षष्ठ्यर्थः सम्बन्धस्तस्याऽसंसर्गेऽतिक्रान्तसम्बन्धे । "असङ्गो ह्ययं पुरुष" इतिश्रुतेः । तस्मिन्नात्मनि सर्वथैवाऽसङ्गे ऽसंगतेरप्राप्तेरप्येवं सति यस्मात्कारणाद्देहे या ममत्वबुद्धिरसङ्ग आत्मेति विवेकाभावात् सा । एवमविवेकात्स्वसम्बन्धबुद्धिः सा भ्रान्तिः । सा विवेकेन मम निःसङ्गत्वादधुना नास्तीत्यर्थः ॥ ९२ ॥

यथा देहे ममत्वप्रतीतिर्भ्रान्तिस्तथा स्त्रीपुत्रादिष्वपि ममत्वप्रतीतिर्भ्रान्तिरित्याह—

किमपि मोहनशक्त्यधिदैवतं
विरचितं विधिना ह्यबलाभिधम् ॥
रुधिरमांसमयं परमार्थतो
भवति तेन जितं भुवनत्रयम् ॥ ९३ ॥

मनोमयी मांसमयी विधात्रा
नारी नराणां निगडस्वरूपा ॥
अमुत्र बन्धाय विनिर्मिताऽऽद्या
स्यादत्र बन्धाय तथा द्वितीया ॥ ९४ ॥

स्त्रीपुंतनूनां रुधिरादिमंच-
भूतात्मकत्वं च समानमेव ॥
देहस्य संस्थानविशेषमात्रम्
परस्परं मोहकरं न चान्यत् ॥ ९५ ॥

तत्र स्त्रीषु ममत्वकरणे महाननर्थ आह श्लोकत्रयेण किमपीत्यादि इमे त्रयोऽप्यतिरोहितार्थाः श्लोकाः ॥ ९३॥९४॥९५॥

एवं स्त्रीणामनर्थकरत्वं निरूप्य तत्र ममता न कार्येत्याह—

एतादृशे ऽर्थे ममता न युक्ता
तथा सुतेऽन्यत्र गृहादिकेऽपि ॥
परस्परं कामवशान् ममत्वं
तथाऽधुना मे विदितं विवेकात् ॥ ९६ ॥

एतादृश इति। "आत्मनस्तु कामाय सर्वं प्रियं भवतीतिश्रुतेः" ॥ काममूलैव ममता न वस्तुगत्या कामाभावे कः कस्य ममतास्पदं प्रेमास्पदं चेत्यनुभवसिद्धमित्यर्थः ॥ ९६ ॥

ननु नाऽपुत्रस्य लोकोऽस्तीति,, वचनात्। "पुत्रार्थमृतौ भार्यामुपेयादितिवचनाच्च"। स्त्रीषु ममता विधेयैव कथं तत्र ममता निषिध्यत इति चेत्तत्राह—

त्रैगुण्यमात्रविषयाः खलु कर्मवेदा
इत्थं हरेर्भगवतो वचनं प्रमाणम् ॥
आदृत्य चानुभवतः परमार्थनिष्ठाः
भार्यामृताविति वचः खलु नाद्रियन्ते ॥ ९७ ॥

त्रैगुण्येति ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेति भगवतो वाक्यं प्रमाणं याथार्थ्येनादृत्य तथा स्वानुभवतश्च वेदानां त्रैगुण्यविषयत्वमादृत्य परमार्थनिष्ठाः पुरुषा ऋतौ भार्यामुपेयादितिवचनं नाद्रियन्ते संसारमूलकत्वादित्यर्थः ॥ परमार्थनिष्ठत्वं चेत्थं । "तद्ध स्मवैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते किम्प्रजया करिष्यामो येषां नोऽयमात्मायं लोकइतिश्रुतेः,,।

संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ॥
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ।

इतिस्मृतेश्च । पुत्रप्राप्तिभिया पुत्रार्थं भार्यायां ममत्वं न कुर्वंतीति ॥ श्रुत्यर्थस्तु येषां नोऽस्माकमयमपरोक्ष आत्मायं लोकः प्रत्यक्षफलं ते वयं किं प्रजया करिष्यामो ऽतो हेतोः पूर्वे विद्वांसः प्रजां न कामयन्त इति । स्मृत्यर्थस्तु त्रैगुण्यं संसारः स विषयः प्रकाशितव्यो येषां ते कर्मकाण्डवेदाः कर्मप्रतिपादकाः श्रुतय इति । किञ्च । "अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति । मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको, विद्यया देवलोको देवलोको वै लोकानां श्रेष्ठतमस्तस्माद्विद्यां प्रशंसन्तीति श्रुतेः,, ॥ पुत्रेण मनुष्यलोकातिरिक्तं फलं नास्तीति निकृष्टफलत्वात्पुत्रफलं नाद्रियन्ते । श्रुत्यर्थस्तु ॥ वार्त्तिकसारे ।

पुत्रेण जय्यो लोको ऽयं पितृलोकस्तु कर्मणा
विद्यया देवलोको ऽतो द्वाभ्यां विद्या प्रशस्यते ॥
क्रियात्वाल्लोकहेतुत्वं युज्यते कर्मविद्ययोः ।
द्रव्यात्मनस्तु पुत्रस्य कथमित्युच्यते शृणु ॥
प्रव्रजिष्यन्मरिष्यन्वा पिता कर्त्तव्यमात्मनः ।
पुत्रे ऽध्ययनयागादि सर्वमप्यर्पयत्यसौ ॥

यागाध्यनकाम्यानि कुर्वन्पुत्रः पितुर्गृहे ।
वसत्येतावता पुत्रजितोऽयं लोक उच्यते इति ।

इतराण्यपि श्रूयन्ते । "सो ऽस्या ऽयमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते अथाऽस्याऽयमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुन र्जायते तदस्य तृतीयं जन्मेति" श्रुतेरयमर्थः ॥ अस्य पितुर्द्वावात्मानौ देहौ तयोर्मध्ये अयमात्मा पुत्ररूपो देहः पुण्येभ्यः कर्मभ्यः शास्त्रोक्तकर्मनिष्पादनार्थं प्रतिधीयते स्वस्य प्रतिनिधित्वेन गृहे ऽवस्थाप्यते। ननु किमनेन प्रतिनिधिना स्वयमेव कुतो न करोतीत्यतआह। अथेति॥ अस्य पितुरितर आत्मा स्थविरो देहः कृतकृत्यः कृतान्येतज्जन्मप्रयुक्तानि सर्वाणि कर्माणि येनाऽसौ कृतकृत्यः लौकिकानां क्षेत्रवपोपणादीनां शास्त्रीयाणामग्निहोत्रादीनां च निष्पादितत्वात्कृतकृत्यत्वं वयोगतः वयसा पूर्वकर्मसम्पादितेनाऽऽयुषा गतो हीनः प्रैति स इतः प्रयन्नेव पुनर्जायत इत्यर्थः । तस्मादेवं निकृष्टफलत्वात् पुत्रार्थं स्त्रीषु ममताकरणमनुचितमितिभावः ॥ ९७॥

किञ्च—

स्वस्यासत्वात्सर्वतो दुःखदा ये
पुत्रा दारागारभृत्यादयो ऽन्ये ॥
तेषु प्रीत्या यो ममत्वाभिमानो
भ्रान्तिश्चैषा नास्ति मे सद्विवेकात् ॥ ९८ ॥

स्वस्येति॥ स्वस्य स्त्रीपुत्रादेरित्यर्थः ॥ शेषं स्पष्टम्॥९८॥

एव स्थूलदेहादात्मानं विविच्य अधुनालिङ्गदेहादात्मनो विवेकः क्रियते—

ना ऽहं सूक्ष्मं सप्तपंक्त्यात्मकं य-

स्त्वप्नस्थानं वासनादेहसंज्ञम् ॥
अस्याध्यासात्स्थूलदेहादिबन्धः
साक्ष्यं तन्मे साक्षिणोऽतोऽस्मि भिन्नः ॥ १९ ॥

नाहमिति ॥ सप्तदशात्मकं पञ्च प्राणा मनो बुद्धिर्दशेन्द्रियाण्येवं सप्तदशावयवात्मकं स्वप्नस्थानं वासनादेहसञ्ज्ञं अस्याऽध्यासात्स्थूलदेहादिबन्धः लिङ्गदेहाध्यासमूलः स्थूलदेहाध्यासः आदिशब्देन स्थूलविषयाध्यासस्तल्लक्षणो बन्ध एतादृशलिङ्गं नाहं मम तेनातादात्म्यमित्यर्थः । तत्रहेतुमाह । मे मम लिङ्गदेहसाक्षिणस्तल्लिङ्गं साक्ष्यं भिन्नमतो हेतोरहं तस्माद्भिन्नो विलक्षणमित्यर्थः । अत्र यद्यपि साक्षिसाक्ष्यभावेन सूक्ष्मदेहादात्मा विवेचितस्तथापि तदवयवेषु मूढानामात्मत्वदर्शनात्तेभ्योऽप्यात्मा विविच्यते ॥ तथाहि । अहमशनायावानहंपिपासावानितिप्राणधर्ममात्मन्यारोप्य प्राण आत्मेति मन्यन्ते तन्न सुषुप्ते चैतन्याभावात् । प्राणस्येतरास्मिन्काले भृत्यस्वामिनोरिव सङ्कीर्णयोर्न ज्ञायते कस्येदं चैतन्यमिति । सुषुप्ते तु पुनः विज्ञानरहितः प्राण उपलभ्यते । करणोपरमाद्विज्ञानाभावः प्राणस्येतिचेन्न । स्वामिनि व्याप्रियमाणे करणोपरमाभावो न राजपुरुषवत् । अत एव न प्राणस्यैतानि करणानि यः स्वापेनोपरतस्तस्यैतानि करणानि । यदाऽसौ बहिर्निर्गम्य करणान्यधितिष्ठति तदा सर्वाणि करणानि स्वस्वव्यापारेषु प्रवर्त्तन्ते । यदा जागृतस्थितिनिमित्तं कर्मोद्भूतं भवति तत्क्षणे सर्वाणि करणानि गृहीत्वा बुध्युपाधिसंपर्कजनितविज्ञानेन स्वप्नं सुषुप्तं वा गच्छति । एवं स्थानत्रयमनवरतं जीवो गच्छति कर्मनिमित्तं चेदं गमनाऽगमनं यत्स्वप्नप्रजागरिते गच्छति पुनः स्थानद्वयनिमित्तकर्मो-

दुभूतश्रमापनयनाय सुषुप्तमपि गच्छति । एवं प्राणस्तत्कर्मवशा- देव शरीरं परिपालयन्वर्त्तते स्वमसुषुप्तयोर्मृतभ्रांतिपरिहाराय तस्मात्प्राणोनाऽऽत्मा । काणो ऽहं बधिरोऽहमितीन्द्रियधर्ममा- त्मन्यारोप्येन्द्रियाण्यात्मेति केचिद्वदन्ति तन्न । तत्र चक्षुरा- त्मा न भवति रूपग्रहणसाधनत्वात् प्रदीपवत् । यथा प्रदीपेन करणेन रूपमुलभते तथा चक्षुःकरणेन रूपमुपलभते । एवमेवे- तराण्यपि करणानि ज्ञेयानि । तथा मनोप्यात्मा न भवति दृश्य त्वात् करणत्वाच्च प्रदीपवदेव । बुद्धिरप्यात्मा न भवति दृश्य- त्वात् करणत्वाच्च प्रदीपवदेव । तस्मात् सप्तदशाऽवयवा अपि न प्रत्यगात्मेति ज्ञेयं कर्त्तुः करणसापेक्षत्वात् । कर्त्तृकरणयोरे- कत्वं न सम्भवति । अतः । करणाभिन्नचिदाभासरूपः कर्त्ता इत्यपि ज्ञेयम् । ननु सप्तदशावयवं लिङ्गमिति सप्तदशसंख्या न युज्यते इन्द्रियाणां न्यूनाऽधिकत्वश्रवणात् । तथाहि । सप्त प्राणाः भवन्ति तस्मात्सप्तेन्द्रियाणि क्वचिच्चाष्टौ ग्रहा अष्टावति- ग्रहा इत्यष्टौ ग्रहाः पुरुषपशुबन्धका इन्द्रियाणि रागाद्युत्पादन- द्वारेण इन्द्रियाकर्षका विषया अतिग्रहा इत्यर्थः । "सप्त वै शी- र्षण्याः प्राणा द्राववांचाविस्यत्र" "नव अवांचौ पायूपस्थौ नव वै पुरुषे प्राणा-नाभिर्दशमीत्यत्र" "दश वै पुरुषे प्राणाः आत्मै- कादशः अत्रा ऽऽत्मा मन" एवं क्वचिद्द्वादश क्वाचिच्च त्रयोदशे- न्द्रियाणि श्रूयन्ते । तथा च न सप्तदशावयवं लिङ्गमिति चेन्न । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकमिति दशेन्द्रियाण्येव नाऽधिकानि न न्यूनानीति ज्ञेयम् । शिवगीतायां पद्मपुराणे सप्तदशावयवं लिङ्गमुत्पत्तिक्रमेण स्मर्यते । श्रोत्रत्वक्चक्षूरसनघ्राणानां क्रमेण दिग्वातार्कवरुणाश्विना अधिष्ठातृदेवताः । मनोबुध्यहंकार- चित्तानां चन्द्राच्युतचतुर्मुखशङ्कराः । वाक्पाणिपादपायूपस्थानां

वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयो ऽधिष्ठातृदेवताः ।

व्योमादि सात्विकांशेभ्यो जायंते धीन्द्रियाणि तु ।
व्योम्नः श्रोत्रं भुवो घ्राणं जलाज्जिह्वा ऽथ तेजसः ।
चक्षुर्वायोस्त्वगुत्पन्ना तेषां भौतिकता ततः ।
व्योमादीनां समस्तानां सात्विकांशेभ्य एव च ।
जायते मानसी बुद्धिर्बुद्धिः स्यान्निश्चयात्मिका ॥
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि तु ।
व्योमादीनां रजोंऽशेभ्यो जायन्ते तान्यनुक्रमात् ।
समस्तेभ्यो रजोंऽशेभ्यः पञ्च प्राणास्ततःपरम् ।
जायन्ते सप्तदशकमेवं लिङ्गशरीरकमिति ।

नागकूर्मकृकलदेवदत्तधनंजयाख्याः पञ्चाऽन्ये वायवःसन्ति। नागउद्गिरणकरः। कूर्मउन्मीलनकरः। कृकलः क्षुत्करः । देवदत्तो जृम्भणकरः । धनञ्जयः पोषणकर इति वदन्ति । वेदान्तिनस्तु तेषां पृथक्कल्पनागौरवाच्छ्रुत्यादिप्रमाणाभावाच्च प्राणादिष्वन्तर्भावम्वदन्ति । तथा एकमेवान्तःकरणं वृत्तिभेदाच्चतुर्विधम् । मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयमिति । तत्र मनोबुद्ध्योरहंकारचित्तयोरन्तर्भावं वदन्ति तस्मात्सप्तदशावयवं लिङ्गमिति सिद्धम् । उदाहृतश्रुतीनां व्यवस्था तु आकरतो ज्ञेया विस्तरभयान्नाऽत्रोच्यत इति । अत्र नवीना इन्द्रियलक्षणमन्यदेव वदन्ति तच्चेत्थं ।सुखदुःखानुकूलसाक्षात्प्रमितिक्रियान्यतरकरणमतीन्द्रियमिन्द्रियम्।आलोकादावतिव्याप्तिवारणायाऽतीन्द्रियमित्युक्तम्। दशेन्द्रियाणामपि विशेषलक्षणानि। तत्र शब्दोपलब्धिसाधनमिन्द्रियं श्रोत्रं, स्पर्शोपलब्धिसाधनमिन्द्रियं त्वक्, रूपोपलब्धिसाधनमिन्द्रियं चक्षुः, रसोपलब्धिसाधनमिन्द्रियं रसनं, गन्धोपलब्धिसाधनमिन्द्रियं घ्राणम् , वचनक्रियासाधनमिन्द्रियं वाक्, आदान-

क्रियासाधनमिन्द्रियं पाणी , गमनक्रियासाधनमिन्द्रियम् पादौ , विसर्गसाधनमिन्द्रियं पायुः, सुखक्रियासाधनमिन्द्रियमुपस्थः । अत्र तेजोमयी वागिति श्रुतेः । तैजसी वा 'क्पादस्तु नाभस इति केचित् । अन्ये तु शब्दव्यंजकत्वेन श्रोत्रवद्वचसो नाभसत्वं पादचिकित्सया चक्षुषः स्वास्थ्यदर्शनाच्चक्षुर्वत्पादस्याऽपि तैजसत्वं युक्तमित्याहुः । अनात्मविचारत्वादत्राऽत्यन्तं नाभिनिवेष्टव्यमिति दिक् ॥ ९९ ॥

अन्येभ्यो ऽपि मनोधर्मेभ्य आत्मानं विविच्य करतलार्पितबिल्ववदपरोक्षतया तं दर्शयति—

अमनस्कतया न मेऽस्ति चिन्ता
न च कामो न च धी र्न भी र्न लज्जा ॥
न समाधिविरोधभावना वा
यत एते तदहं विभान्ति तेजः ॥ १०० ॥

अमनस्कतयेति ॥ "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मन एवेति श्रुतेः । आत्मधर्मा एते न किन्तु मनसः । तत्र चिन्ताऽऽत्मीययोगक्षेमोपायालोचना सा मे नास्ति । तथा कामो ऽभिलाषः । चेत्यपरम् । धीर्निश्चयात्मिका । च पुनः भीर्भयम् । तथा लज्जा प्रसिद्धा । मद्धर्मा न भवन्तीत्यर्थः । अत्र हेतुमाह । अमनस्कतया मनःसाक्षितया तद्भिन्नतयेत्यर्थः । तदेवं निर्विशेषो निर्धर्मक आत्मा कथं लक्षणीय इत्यत आह । यत एते उक्ताश्चिन्तादयो धर्माः मनोधर्मिसहिताः विभान्ति प्रकाशन्ते येनैषां सिद्धिर्भवतीत्यर्थः॥ तत्तेजो ज्योतिरहमात्मेति स्वप्रकाशतयैव लक्षणीय इति भावः । तथा च श्रुतिः ।

" यन्न मनसा मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति " ॥

तथा पातञ्जलसूत्रमपि । " सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्याऽपरिणामादिति" । तथा समाधिःसमाधानं विरोधो वैरं विक्षेपो वा भावना ध्येयाकारा वृत्तिरेते ऽन्येपि सर्वेऽपि मनोधर्माः नाऽऽत्मनः । कस्तर्ह्यात्मेत्यत आह । यत एते उक्ताः पदार्था भाति येनैषां सिद्धिः भवति स आत्मेत्यर्थः ॥ १०० ॥

अस्याऽध्यासात् स्थूलदेहादिबन्ध इत्युक्तं तदत्र स्पष्टतया प्रतिपाद्यते—

यथा मणिः स्वाश्रयनीलपीत-
द्रव्यादियोगेन विचित्रवर्णः ॥
आत्मा तथा स्वाश्रयलिङ्गकर्म-
दोषैरनेकैर्बहुधेव भाति ॥ १०१ ॥

यथेति । आत्मा चिदाभासरूपो जीवः स्वाश्रयलिङ्गकर्मदोषैः पुण्यपापरूपैरनेकैः बहुसंख्यैः संसारस्यानादित्वाद्बहुधेव बहुप्रकारमिव भाति । इवशब्दात् न वस्तुगत्या बहुधा स्वरूपमस्येत्युक्तम् । तथा च श्रुतिः ।

" तदेव सक्तः सह कर्मणैव लिङ्गं मनो यत्र निषक्तमस्य
प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नु कामयमान इति " ।

अस्या श्रुतेरर्थः ॥ अस्योद्भूताऽभिलापस्य लिङ्गं सप्तदशावयवात्मकं मनः प्रधानत्वान्मनः शब्दवाच्यम् । यत्र यस्मिन्नान्तव्ये फले निषक्तं निश्चयेन सक्तं भवति तत्र सक्त-

स्तत्फलारम्भकीभूतकर्मणा सह तदेव गन्तव्यं फलमेति नन्वेतद्भोगानन्तरं कामाभावान्मुक्तो भविष्यतीत्यत आह । अयं फलासक्तः कामी ह्यस्मिन्लोके यत्किञ्चित्करोति तस्य कर्मणो भोगेन अन्तमवसानं प्राप्य तस्माद्भुक्तभोगात्पुनरेत्यागच्छति । अस्मै लोकाय अस्मिन् मनुष्यलोके । कर्मणे कर्मकरणार्थम् । एवं मनो धर्मकामासाधारणकं संसारमुपसंहरतीत्येवं नु कामयमान इत्यर्थः ॥ १०१ ॥

बहुधेनेत्युक्तं तदेव दर्शयति—

देवस्तिर्यङ्मर्त्यसंज्ञोऽण्डजादि-
योनिः क्लिश्यन्नैव विश्रान्तिरासीत् ॥
लिंगाध्यासाद्व्यापकस्यापि याता-
ऽऽयाते नैते वस्तुतो मे भवन्ति ॥ १०२ ॥

देव इति । देवयोनिः तथा तिर्यग्योनिः मर्त्यसंज्ञो मर्त्ययोनिरण्डजादियोनिरादिशब्देन चतुरशीतियोनिरहमेव क्लिश्यन् लिङ्गाध्यासादेतादृशस्य मे मम कदापि न विश्रान्तिरासीत् । तस्मादेव हेतोर्व्यापकस्याऽपि गमनाऽगमनायोग्यस्याऽपि यातायाते मे अभूताम् अहो लिङ्गाध्यासस्य सामर्थ्यमेतदिति । वस्तुतस्तु परमार्थतः स्वस्यासङ्गत्वव्यापकत्वज्ञानादेते मम कालत्रयेऽपि न भवतो न स्तः। यद्वा एते यातायाते परमार्थतो मे न भवतः। एते निरूपिता नानायोनिसंबन्धा अपि मे वस्तुतो न भवन्तीत्यर्थः ॥ १०२ ॥

ननु लिङ्गस्थकर्मदोषैरेव नानायोनिसंबन्धस्तर्ह्यनीश्वरवादः प्राप्नोत्यत आह—

कर्माध्यक्षः सर्वलोकाधिवासो

ह्यंतर्यामी नर्त्तयेत्सूत्रधारः ॥
तस्मात्प्राणी नृत्यते वासनाभि-
स्ताभिस्तां तां योनिमायाति मूढः ॥ १०३ ॥

कर्माध्यक्ष इति । कर्माध्यक्षः कर्मफलदाता सर्वलोकाऽधिवासो ऽन्तर्यामी सूत्रधार इव प्राणिनो नर्त्तयेत् । तस्मात्प्राणी जीवो वासनाभिः पूर्वसंस्कारैः नृत्यते तादृक्कर्म करोतीत्यर्थः । " तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति " श्रुतेः । ताभिः वासनाभिरेव तां तां योनिमायाति प्राप्नोति मूढो ऽविद्यावशः ।

यं यं वापि स्मरन्भावन्त्यजत्यन्ते कलेवरम् ।
तं तं मेवैति कौन्तेय सदा तद्भावभावितः ।

इति स्मृतेश्चेत्यर्थः । तथा च । कर्माध्यक्षश्रुतेः । अनीश्वरवादो न घटते इत्यर्थः।एतेनापूर्वमेव कर्म मीमांसकमते फलं ददातीतिमतं परास्तं निर्मूलत्वादिति ध्येयम् ॥ १०३ ॥

प्रसंगान्मरणावस्थादुःखं निरूप्यते । ज्ञानोपयोगिवैराग्योत्पत्त्यर्थम्—

देहान्निर्यत्सर्वमर्मस्थलेभ्यो
दुःखं यद्यद्याति देहान्तरं तत् ॥
एवं मृत्योर्मृत्युमाप्नोति जीवः
स्वात्माज्ञानाच्छीघ्रते तन्न मेऽस्तु ॥ १०४ ॥

देहादिति ॥ तत्स्वात्माज्ञानकार्यभूतं लिङ्गम् ॥ १०४ ॥

एवं लिङ्गदेहादात्मानं विविच्य कारणदेहादीनमृतादपि स विविच्यते—

न्यग्रोधबीजमिव यत्खलु सर्वबीजम्
नो सन्न चोभयमसन्न विरोधहेतोः ॥
ज्ञानैकनाश्यमखिलावरणस्वभावम्
नाहं सदस्मि परमं तमसः परस्तात् ॥ १०५ ॥

न्यग्रोधबीजमिति॥यत्खलु निश्चयेन सर्वबीजं सर्वविक्षेपबीजं कारणं मूलाऽज्ञानं तदहं न आत्मा तत्साक्षित्वादित्यर्थः । तद्बीजं न सज्ज्ञानैकनाश्यत्वात् । न चाऽसत्प्रतीयमानत्वान्न चोभयविरोधात् तस्माद्यत्किञ्चिदेतन्निखिलं ब्रह्म चैतन्यं तदावरणस्वभावं तदाश्रयं चेत्युभयम्।चैतन्याश्रयविषयमित्यर्थः । तदहं न। तत्र हेतु माह । तमसः परस्तात् अज्ञानस्य परस्माद्यत्परमं सत्तदहमस्मीत्यर्थः । यत्तमसो भासकं तत्कथं तमः स्यात् । भास्यभासकयोरैक्यायोगादितिभावः ॥ १०५ ॥

आदित्यवर्णं तमसः परस्तादिति श्रुत्युक्तम् यत्प्रत्यक्स्वरूपं तत्र वादिविवादैरन्यथाबुद्धौ बीजमाह—

अज्ञानधीः प्राणहृषीकदेहे
प्रत्यक्चिदाभासवशेन वादिनः ॥
आत्मत्वबुध्या विवदंति मूढाः
प्रत्यक्स्वरूपं न विदन्ति तत्वतः ॥ १०६ ॥

अज्ञानेति॥ हृषीकाणीन्द्रियाणि द्वन्द्वैकवद्भावः । उक्तं च ।
आत्मच्छायं पयोऽशेषं यथा मरकतो मणिः ।
परीक्षणाय प्रक्षिप्तः कुर्यादात्मा तथैव हि ॥
ज्योतिरात्मा चितिच्छायं प्रथमं कुरुते तमः ।

तमोयोगेन धीस्तद्धीयोगादिन्द्रियं तथा ॥
अक्षयोगात्तया देहमेवमेते चिदात्मवत् ।
भासन्ते तेष्वतः पुंसां प्रत्यगात्मत्वविभ्रम इति ॥

वादिविप्रतिपत्तयस्त्वेवं पूर्वाचार्यैः विविच्य दर्शिताः । तथाहि । अतिप्राकृताः "स्वात्मावैपुत्र" इत्यादिश्रुतेः स्वास्मिन्निव स्वपुत्रे प्रियत्वदर्शनात्पुत्रे नष्टे पुष्टे वाऽहमेव नष्टः पुष्टश्चेत्यनुभवात्पुत्र आत्मेति वदन्ति । चार्वाकास्तु "स वा एष पुरुषो ऽन्नरसमय इत्यादिश्रुतेः प्रदीप्तगृहात्स्वपुत्रं परित्यज्याऽपि स्वस्य निर्गमदर्शनात्स्थूलो ऽहं कृशो ऽहं मित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदन्ति । अपरश्चार्वाकः "ते ह प्राणाः प्रजापतिमेत्य ब्रूयुरित्यादि" श्रुतेः इन्द्रियाणामभावे शरीरचलनाभावात्काणोऽहं बधिरो ऽहमित्याद्यनुभवाच्चेन्द्रियाण्यात्मेति वदति । अपरः चार्वाकः "अन्योऽन्तरात्मा प्राणमय,, इत्यादिश्रुतेः प्राणाऽभावे इन्द्रियचलनायोगादहमशनायावानहं पिपासावानित्याद्यनुभवाच्च प्राण आत्मेति वदति । अन्यस्तु चार्वाकः "अन्योऽन्तरात्मा मनोमय,, इत्यादि श्रुतेः मनसि सुप्ते प्राणाऽपानादेरभावादहंसङ्कल्पविकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति । बौद्धस्तु "अन्योऽन्तरात्मा विज्ञानमय" इत्यादि श्रुतेः कर्त्रभावे करणस्य शक्त्यभावादहं कर्त्ताऽहं भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मेति वदति । प्रभाकरतार्किकौ तु "अन्योऽन्तरात्मा ऽऽनन्दमय" इत्यादिश्रुतेः बुद्ध्यादीनामज्ञाने लयदर्शनादहमज्ञोऽहं न जानामीत्यनुभवाच्चाऽज्ञानमात्मेतिवदतः । भाट्टास्तु "प्रज्ञानघन एवानन्दमय" इत्यादिश्रुतेः सुषुप्तौ प्रकाशाऽप्रकाशसद्भावान्मामहं न जानामीत्यनुभवाच्च ज्ञानोपहितचैतन्यं ज्ञानाऽज्ञानस्वरूप-

मात्मेति वदन्ति। अपरबौद्धस्तु "असदेवेदमग्रआसीदित्यादि" श्रुतेः सुपुप्तौ सर्वाभावादहं सुपुप्तौ नाऽऽसमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति। एवं च सति तेषूपाधिषु प्रत्यक्चिदाभासबलेन तं तमुपाधिमात्मबुद्ध्या विवदन्ते। परन्तु तत्वतः प्रत्यक्स्वरूपं ब्रह्मेति न विदन्ति न जानन्ति। पण्डितंमन्यत्वादित्यर्थः ॥ १०६ ॥

क्षुधाद्युपद्रवाः सर्वेऽप्युपाधेरेव नात्मन इति सर्वविकाररहितमात्मानं दर्शयति—

असोः क्षुत्पिपासे धियः शोकमोहौ
जरामृत्युरोगाः शरीरस्य जन्म ॥
अवस्थाः सुषुप्त्यादयो या धियस्ताः
समस्ता अहं निर्विकारोऽस्मि शान्तः ॥ १०७ ॥

असोरिति॥ असोः प्राणस्य सञ्चारबाहुल्याद्गमनादिश्रमे सति क्षुत्पिपासे प्राणधर्मौ नात्मन इत्यर्थः। इष्टवस्तुनाशप्राप्तौ बुद्धे र्योऽनवस्थितिः स शोक उच्यते। विषयभ्रमो मोहस्तावुभावपि बुद्धिधर्मौ नात्मनइत्यर्थः। जरा शरीरशैथिल्यं, मृत्युः प्राणवियोगः, रोगो धातुवैषम्यं एते शरीरस्य धर्माः। एवं च क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयो बृहदारण्यकोक्ताः उपाधिकृताः नात्मन इत्यर्थः। क्षुदुपद्रवादन्नभोक्ता प्राणो देहेन्द्रियाणि पुष्णाति ॥ तदुक्तम् ॥

तर्पयत्येष वागादि स्वभुक्तान्नेन सर्वशः
इत्यर्थस्य कुतः सिद्धिरितिचेदुच्यते शृणु ॥
भुक्तं त्रिधा भवत्यन्नं स्थूलमध्यमसूक्ष्मकैः ॥

भागः स्थूलो बहिर्याति मध्यमाद्देहपोषणम् ॥
अणीयान्सूक्ष्मनाडीस्थो देवताः पोषयत्ययम् ॥
दुष्टेन्द्रियैः सुखोत्पत्तिर्या जीवात्मन एव सा ॥
ता एव देवताः सप्तदश ज्ञानक्रियात्मकाः ॥
सोऽयं सप्तदशग्रामो भोक्तुः करणलक्षण इति ।

एवमशितान्नस्य प्रयोजनं देहेन्द्रियपोषणमतोऽहंनिर्विकार एवास्मीत्यर्थः । सुषुप्त्यादयः समस्ताः जाग्रत्स्वप्नसुषुप्तिमूर्च्छा मरणाख्या अवस्थाः पञ्च धियो बुद्धेः । अहंमत्यमत्ययावलम्बनः प्रत्यगात्मा त्वंपदार्थो निर्विकारः कूटस्थत्वादविक्रियो निस्तरङ्गा ब्धिरिव शान्तः परमार्थत इत्यर्थः । कथमवस्थाः बुद्धेः स्तदर्थं तल्लक्षणान्युक्तानि आचार्यैः । देवतानुगृहीतैरिन्द्रियैरर्थोपलब्धिर्जागरितम्, संस्कारजः प्रत्ययः सविषयः स्वप्नः। स्मृतावतिव्याप्तिवारणाय सविषयपदम्। बुद्धेः कारणात्मनावस्थानं सुषुप्तिः। इत्यादीन्द्रियगा बुद्धिर्निद्रा, स्वप्नबोधकदित्युक्ते बुद्धेरेवाऽवस्थात्रयम्। देवताऽनुगृहीतैरितिकिमर्थमुक्तमितिचेत् तत्रोच्यते। यथा अचेतनो रथश्चेतनं सारथिं विना न कार्यक्षमः तथा अचेतनानीन्द्रियाणि चेतनदेवताऽनुग्रहं विना न स्वार्थग्रहणयोग्यानीति। यथा रथस्वामिनो रथजसुखदुःखभोक्तृत्वं न सारथेस्त था जीवस्यैव भोक्तृत्वं नेन्द्रियदेवतानामित्याकरे विस्तरः। एतदवस्थात्रयं विस्तरेण प्रपञ्चितं पञ्चीकरणवार्त्तिके विस्तरभयान्नेह प्रपञ्च्यते। मुद्गरप्रहारादिजनितविषादेन विशेषज्ञानोपरमावस्थेयंमूर्च्छा । इयंमूर्च्छावस्था भगवता बादरायणेन पृथक्त्वेन निरूपिता। तथा च सूत्रं। "मुग्धेऽर्धसम्पत्तिः परिशेषादिति" अस्यार्थः। न तावत्स्वप्नजागरिते मूर्च्छाऽवस्था नापिमरणावस्था प्राणोष्मणोः सत्वात् नापि सुषुप्तिर्वैलक्षण्यात् । मुग्धस्य शरीर-

कम्पो भयङ्करं वदनं निश्चले उन्मीलिते नेत्रे निश्वलप्राणोऽवतिष्ठते । नैवं सुषुप्तौ भवति तस्मात्परिशेषादर्धसम्पत्तिर्मुग्धावस्थाऽतिरिक्तैव वक्तव्या । ननु मुग्धे ऽपि बाह्यान्तःकरणानामभावेन सत्संपत्तेः सुषुप्त्यविशेषात् कथमर्धसम्पत्तिरितिचेत्सत्यं । न हि ब्रह्मणोऽर्धसम्पत्तिं मुग्धस्य ब्रूमः । किंतु सुषुप्त्यवस्थायाः ये धर्मा प्रसन्नवदननिमिलितनेत्रत्वप्राणोच्छ्वासविशेषविज्ञानराहित्यादयस्तत्रविशेषज्ञानराहित्यादिना ऽर्धेन धर्मजातेन मुर्च्छावस्थायाः सम्पन्नत्वादर्धेन मरणाऽवस्थाधर्मजातेन कम्पादिना युक्तत्वादर्धसम्पत्तिर्मूर्च्छेति युक्तं सूत्रकृद्वचनमिति । एतच्छरीरकर्मोपरमेण देहाभिमाननिवृत्त्या सम्पिण्डितकरणग्रामावस्था भाविशरीरपर्यन्तं मरणावस्था । तथा च श्रुतिः । "स यत्राऽयमात्माऽबल्यमेत्य संमोहमिवैत्यथैनमेते प्राणा अभिसमायन्ति । स एतास्तेजोमात्राः समभ्याददानो हृदयमेवाऽन्वक्रामति" । "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्त्ततेऽथारूपज्ञो भवति एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवतीत्यादि" । श्रुतेरर्थः । स पूर्वोक्तोऽयमात्मा यत्र यस्मिन्काले जराद्युक्तहेतुभिरभिभवे सति अबल्यमिवाऽबलभावमिव दौर्बल्यमिव नितरामेत्य प्राप्य संमोहमिव संमूढतामिवैति याति । अथ तदा एनमात्मानं करणस्वामिनं प्राणवागादयो ऽभिसमायन्ति । कथं स आत्मा तेजोमात्रावयवाः मीयन्ते ते विषयाः याभिस्तास्तेजोमात्राश्चक्षुरादिकरणानि । समभ्याददानः सम्यङ्निःशेषाभिमुखेनाऽऽददान उपसंहरमाणो हृदयमेव हृदयस्थां बुद्धिमेत्रा ऽन्वक्रामत्यन्वागच्छति बुद्धावेवाऽभिव्यक्तविज्ञानो भवति । एवं सति किंस्यादिति विवक्षायामाह । स चाक्षुषः पुरुष आदित्यांशोभोक्तृत्वकर्मक्षये सति यत्र यस्मिन्का-

ले पराङ् विमुखः सन्स्वांशीभूतदेवतारूपं प्रतिपर्यावर्त्तते आसमन्ताद्भावेन परिवर्त्तते । अथ तदा मुमुर्षुररूपज्ञो भवति रूपं न जानातीत्यर्थः । कुत इत्यत आह । एकीति । आदित्यांशस्तस्मिन्नेकीभूते सति चक्षुर्लिङ्गात्मना एकीभवति तदा मुमुर्षुः पार्श्वस्थं न पश्यतीत्याहुरेवमग्रेपीत्यर्थः । एवं श्रुत्यनुभवप्रामाण्यात्समस्ता अवस्था बुद्धेरित्युक्तम् ॥ १०७ ॥

त्रिविधपरिच्छेदशून्यत्वं श्रुत्या ऽनन्तशब्देनोक्तं तदात्मनो दर्शयति—

कालेयत्ता नास्ति मे नित्यताया
देशेयत्ता नास्ति मे व्यापकत्वात् ॥
सर्वात्मत्वान्नास्ति मे वस्त्वियत्ताऽ
नन्तस्तस्मात्को ममाऽन्तस्य वेत्ता ॥ १०८ ॥

कालइति ॥ सर्वदेहेष्वनुस्यूतत्वाच्चाहन्देशपरिच्छेदराहित्यम् । परिच्छेदस्य मिथ्यात्वादित्यर्थः । नित्यत्वात्कालपरिच्छेदशून्यत्वमित्यर्थः । त्रिविधपरिच्छेदस्यापि तत्कल्पितत्वेन मिथ्यात्वादितिभावः । कर्मवशाच्चतदुपाधीनामन्तःकरणतद्वृत्यादीनामत्यन्तभिन्नत्वाच्चदुपाधिकचिदाभासस्यापि जन्मविनाशशालित्वात्कालतःपरिच्छेदः तदन्तःकरणवृत्तीनां परस्परतादात्म्यप्रतिषेधेन तदुपाधिकचिदाभासानामपि परस्परतादात्म्यप्रतिषेधाद्वस्तुतः परिच्छेदः । एवं च शरीरान्तर्गतत्रिविधपरिच्छेदं ज्ञात्वा यथोक्तरीत्या तन्निषेधो ज्ञेयः ॥ १०८ ॥

द्रष्टृत्वसाक्षित्वरूपविकारराहित्यमात्मनो दर्शयति—

द्रष्टा नाऽहं दृश्यमिथ्यात्वहेतो-

नाऽहं साक्षी साक्ष्यमिथ्यात्वहेतोः ॥
प्रत्यक्सिध्यै दृश्यतो ऽन्यत्वसिद्ध्यै
द्रष्टा साक्षी चेति बोधो गुरुभ्यः ॥ १०९ ॥

द्रष्टेति । द्रष्टृत्वं साक्षित्वं च सप्रतियोगिकं भवति प्रतियोग्यभावे तु नोभयमित्यर्थः । ननु तर्हि गुरुभिः श्रुतिद्वारेव द्रष्टा साक्षी चेति किमर्थं शिष्यो बोध्यत इत्यत आह । कः प्रत्यगात्मेति शिष्यैः पृष्टे सति तद्बोधार्थं बाह्यपदार्थावभासकः स द्रष्टा आत्मेति कथ्यते । यश्चान्तः सुखादिविषयावभासकः स साक्षी आत्मेति गुरुणा बोधिते सति द्रष्टा साक्षी अहमस्मीति प्रत्यक्सिद्धिः भवतीत्यपरम् । एवं गुरुबोधाद्दृश्यादन्य आत्मेति सिध्यत्यतो द्रष्टा साक्षी चेति गुरुभ्यो बोधो युक्तः । वस्तुतस्तु न द्रष्टा नापि साक्षी चेत्यर्थः ॥ १०९ ॥

शरीरस्य च जन्मजरादयो धर्मा इत्युक्तं तत्र तावज्जन्मलक्षणं दर्शयति—

लिङ्गोपाधेरात्मनो यः प्रवेशः
पित्रोर्देहे जन्म चैतन्नराणाम् ॥
ऐक्याध्यासात्तं विवेकेन हित्वा
सम्यग्ज्ञानान्नैव मे जन्मशंका ॥ ११० ॥

लिङ्गोपाधेरिति । लिङ्गदेहोपाधेरात्मनश्च पूर्वोक्तरीत्या विवेकेन चिज्जडपृथक्विवेकेन तमैक्याध्यासं हित्वा ब्रह्माऽहमस्मीति सम्यक्ज्ञानान्न जन्मशङ्केत्यर्थः । एवमैतरेयश्रुतौ जन्म श्रूयते । "पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्यो ऽङ्गेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति तद्यदा

स्त्रियां सिञ्चत्यथैनं जनयति तदस्य प्रथमं जन्मेति ”। तस्मात्पूर्वोक्तचिज्जडपृथग्विवेकेन निःसंशयाऽविपर्ययनिश्चयान्मे मम जन्मशङ्काऽपि नास्ति कुतो जन्मप्राप्तिरित्यर्थः ॥ ११० ॥

मृतिं लक्षयति—

पित्रोर्मलोद्भूततनोरसूनाम्
वियोजनं कर्मवशात्स मृत्युः ॥
आस्तां किमेनेन हि साक्षिणो मे
मृत्योः परं मृत्युरहं सदस्मि ॥ १११ ॥

पित्रोरिति ॥ यदि देहप्राणयोः मद्दृश्ययोः वियोजनं जातं तर्हि साक्षिणो मे ममैतेन किं न किञ्चित्यर्थः । अतस्तद्यथा तथाऽऽस्ताम् । अहं मृत्योः मृत्युः साक्षी यत्परं उत्पत्त्यादिरहितं सन्मात्रं ब्रह्म तदस्मि अतो मृत्योरपि मृत्युरहमस्मीत्यर्थः ॥ १११ ॥

सम्प्रति प्रमातृस्वरूपविकाररहितस्त्वंपदलक्ष्य आत्मेति प्रतिपाद्यते—

प्रत्यक्छायाव्याप्तधीवृत्तियोगो
बाह्यार्थानामिन्द्रियैः कर्मतः स्यात् ॥
तस्मिन्काले बाह्यवस्तुप्रमाता
तस्मान्नाहं वस्तुतोऽस्मि प्रमाता ॥ ११२ ॥

प्रत्यगिति ॥ भोगप्रदकर्मत इन्द्रियैर्बाह्यार्थानां घटादीनां प्रत्यक्चिदाभासव्याप्तधीवृत्तियोगो यदा भवति तस्मिन्नेव काले अहं प्रमाता तदन्यकाले समाधौ सुषुप्तौ वा आतोऽहं वस्तुतो प्रमाता नैवास्मीत्यर्थः ॥ ११२ ॥

प्रमातृत्वनिबन्धनं कर्तृत्वं भोक्तृत्वं च तदभावे न कर्ता न

भोक्ता नैवोभयमप्यात्मन इत्याह—

कर्त्ताभोक्ताऽहं प्रमात्रैकमूल-
स्तस्याभावे नैव कर्त्ता न भोक्ता ॥
कादाचित्कं मय्यसंगे समस्तम्
संसाराख्यं भ्रान्तिमूलं न चास्ति ॥ ११३ ॥

कर्त्तेति ॥ प्रमातृत्वं कर्तृत्वभोक्तृत्वरूपं यत्संसाराख्यं तत्कादाचित्कं मय्यऽसङ्गे स्वरूपे वस्तुतो नास्तीत्यर्थः । कर्त्ताहं भोक्ताऽहमित्यादिभ्रान्तीनां तत्प्रमातृत्वं मूलं निदानमित्यर्थः ॥ ११३ ॥

नन्वाभासस्यैव प्रमात्रादिरूपेण ब्रह्मत्वात् शुद्धचैतन्यस्य मुक्तत्वाद्बन्धमोक्षयोर्वैय्यधिकरण्यं तथा च स्वनाशार्थं प्रवृत्त्यनुपपत्तेश्चेति दोषद्वयं प्राप्तमत आह—

एतद्द्वाराऽऽरोपितश्चाविवेका-
त्संसारोऽयं कर्तृभोक्तृस्वभावः ॥
शुद्धे तत्वे चाऽधुना सद्विवेका-
द्भूमैवाऽहं सर्वसंसारमुक्तः ॥ ११४ ॥

एतद्वारेति ॥ स्वचिदाभासद्वारा शुद्धस्यैव बन्धकल्पना मोक्षकल्पना न स्वत इति भावः । अतएवोक्तमाचार्यैः—

'अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।
अध्यस्यत्यविवेकेन चलनादि यथाऽम्भस इति ।
वार्त्तिकेऽपि ॥
"अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शन" मिति ॥११४॥

शास्त्रे स्वाश्रयाऽव्यामोहिनी मायेत्युच्यते । स्वाश्रयव्यामो-

हिन्यविद्येत्युच्यते । सा चाऽविद्या यावद्दृढविवेको न तावत्पर्यं-तमेव स्वाश्रयं जीवं मोहयत्यन्यथा नेत्याह—

यथा स्वाश्रयं मोहयेन्नैव माया
विशुद्धं परं ब्रह्म गोपालकृष्णम् ॥
विवेकाद् दृढाच्छास्त्रतः सद्भिरुक्ता
तथा स्वाश्रयं मोहयेन्नाऽप्यविद्या ॥ ११५ ॥

यथेति ॥ यथोक्ताद्विवेकाच्चिज्जडग्रन्थिरूपस्याऽहंकारस्य निवृत्तत्वाज्जीवो ऽहं कर्त्ता भोक्तेत्यादिरूपं स्वाश्रयव्यामोहत्वं पूर्ववदविद्याया न सम्भवतीत्यर्थः । अन्ये तु एकस्यैवाऽज्ञान-स्याऽऽधिदैविकी शक्तिर्माया आध्यात्मिकी शक्तिरविद्येति माया-विद्ययोः शक्तिभेदेन भेदो न स्वरूपेणेत्याहुः ॥ ११५ ॥

अथाऽऽत्मप्रपञ्चयोः स्वरूपविवेकमाह—

ज्ञानं हि यन्निर्विषयं स आत्मा
सगोचरं ज्ञानमिह प्रपंचः ॥
सगोचरज्ञानवतां नराणाम्
दुःखं भयं जन्ममृती च नित्यम् ॥ ११६ ॥

ज्ञानमिति ॥ "अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवेति" श्रुतेः । जात्यंतराऽननुविद्धं ज्ञप्तिमात्रं निर्विषयमेकरसं ज्ञानं चैतन्यं स आत्मेत्यर्थः । "यत्र त्वस्य सर्वमात्मैवाऽभूत्त-त्केन कं पश्येदिति" श्रुतेः । "यत्र हि द्वैतमिव भवति तदि-तर इतरं पश्यतीत्यादि" श्रुतेः । सविषयं ज्ञानं प्रपञ्चः । ईश्व-रोपि सर्वज्ञत्वात्सर्वपदार्थविषयस्फुरणात्प्रपञ्चान्तर्गत एव ।

छान्दोग्ये। "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्राऽन्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पमित्युक्ते" निर्विषयं चैतन्यमात्मा सविषयं ज्ञानरूपं स प्रपञ्च इति प्रतीयते। तत्र सगोचरज्ञानवतां प्रपञ्चिनां नराणां दुःखभयादि नित्यं नियमेनेत्यर्थः ॥ ११६ ॥

अतएव—

ब्रह्मात्मता मे न हि कृत्रिमाऽस्ति
जीवत्वमेतन्मम कृत्रिमं यतः ॥
अकृत्रिमः कृत्रिम एव भाति
स्त्रीवेषधारी पुरुषो यथा तथा ॥ ११७ ॥

ब्रह्मेति ॥ "स एष इह प्रविष्ट आनखाग्रेभ्य" इत्याद्यनेकश्रुतिषु ब्रह्मण एव प्रवेशस्मरणाज्जीवस्य ब्रह्मत्वमकृत्रिमं स्वाभाविकं जीवत्वं तु कृत्रिमं स्वस्वरूपादज्ञानादित्यर्थः। दृष्टान्तः स्पष्टः ॥ ११७ ॥

एवमकृत्रिमं ब्रह्मानन्दं स्वस्वरूपं प्राप्य कृत्रिमसुखैर्विषयेन्द्रियसंयोगसंभवैर्न किञ्चित्प्रयोजनमित्याह—

अकृत्रिमानन्दनिजस्वरूपम्
विहाय किं कृत्रिमशर्मभिर्मे ॥
सिद्धौदनं पात्रगतं विहाय
मूढो ह्यसिद्धाय यतेत तद्वत् ॥ ११८ ॥

अकृत्रिमेति ॥ स्पष्टार्थः ॥ ११८ ॥

कृत्रिमसुखस्याऽर्थो क्लेशोऽन्तेऽपि क्लेश इत्याह—

नानाक्लेशैः सोमपानादि कृत्वा
स्वर्गं गत्वा कृत्रिमं शर्म भुञ्जन् ॥
स्वर्गे तिष्ठन् प्रत्यहं पुण्यहान्या
क्लिश्यन्नेवं मर्त्यलोकं प्रयाति ॥ ११९ ॥

नानाक्लेशैरिति ॥ स्वर्गभोगविशेषभूमिं धूमादिमार्गेण गत्वा प्राप्य तत्र कृत्रिमं विषयेन्द्रियजन्यं सुखं भुञ्जन् वर्त्तत इत्यर्थः। पुनश्च स्वर्गे तिष्ठन्नपि प्रत्यहं पुण्यहान्या क्लिश्यन्श्रुत्युक्तावरोहणप्रकारेणाऽनुशायी जीवो मर्त्यलोकं प्रयाति।

क्षीणे पुण्ये मर्त्यलोकं विशन्तीतिस्मृतेः।

श्रुतिस्त्वेवम्। "अथैतमेवाध्वानं पुनर्निवर्त्तते यथेदमाकाशाद्वायुर्वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवौषधिवनस्पतयस्तिला माषा इति जायते इति"। आकाशवाय्वादिसमानो भवतीत्यर्थो बोध्यः।नत्वाकाश इत्याकरे विस्तरः॥११९॥

एवमाद्यन्तयोः क्लेशज्ञाने ऽपि न वैराग्यलेश इत्याह—

जानन्नेवं नास्ति वैराग्यलेशः
केयं भ्रान्तीराजसी वृत्तिरुग्रा ॥
आस्तामेतद्रामकृष्णप्रसादा-
न्नित्यानन्दः कृष्ण एवाऽहमस्मि ॥ १२०

जानन्निति ॥ परदोषगवेषणमास्तां किं मम तेनेति भावः। शेषं स्पष्टम् ॥ २० ॥

संसारनिन्दापूर्वकं स्वस्य गुरुप्रसादनपरमानन्दप्राप्तिं दर्शयति—

धिक्संसारमिमं न यत्र परमं शर्मास्ति यल्लभ्यते
यद्यत्पश्यति जिघ्रतीह सकलं दुःखेन सम्भिद्यते ।
किं मे तादृशशर्मणाऽथ परमानन्दो गुरोः संस्मृतेः
संप्राप्तोऽस्त्यधुना ह्यसौ श्रुतिगतो मत्तोऽत्र नो भिद्यते॥२१॥

धिगिति ।

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते इति ।

स्मृतेः । दुःखसम्भिन्ना एवेत्यर्थः । संस्पर्शजा भोगाः श्रु- ब्रानन्दा इत्यर्थः । श्रुतिगतः श्रुतिसंमत इत्यर्थः । अत्राऽस्मिन् वर्त्तमानदेहे एवेत्यर्थः । सम्प्राप्त इत्युक्त्या स्वर्गादिवत् कर्मफल- प्राप्तिरिव तस्य प्राप्तिरिति प्राप्ते तं निवारणार्थमाह । मत्तो न भिद्यते मत्तो चैतन्यघनान्न भिद्यते अविद्यानिवृत्तेरित्यर्थः । तद- लमित्यपिपाठः । तल्लन्धग्रहणादि अलमत्यर्थदुःखेन सम्भिद्यत इत्यर्थः ॥ २१ ॥

दुःखेन सम्भिद्यत इत्युक्तं तत्र हेतुमाह—

अकर्त्तापि सन्कर्तृतां प्राप्य मोहा-
दकृतं कर्म तस्याऽत्र पाकोऽयमीदृक् ॥
इदानीमकर्त्ताऽऽत्मबोधेन सम्यक्
प्रसादाद् गुरोर्भूममात्रोऽहमस्मि ॥ १२२ ॥

अकर्त्तेति ॥ " यद्यत्पश्यति जिघ्रतीह सकलं दुःखेन सम्भिद्यत " इत्युक्तं तत्र सुखादिप्राप्तिस्तु कर्म विना न सम्भ- वति तत्कर्म परमार्थतोऽकर्त्राऽपि मोहात्कृतं तस्याऽत्र संसारे ईदृग्दुःखेन सम्भिन्नोऽनुभूयते पाकः कर्मविपाक इत्यर्थः । शेषं स्पष्टम् ॥ २२ ॥

इदानीमकर्त्रात्मबोधेनेत्युक्तं तत्र गीतोपनिषत्संमतिमाह—

शरीराद्यधिष्ठानपञ्चप्रकारैः
क्रियाहेतुभिर्या क्रिया जायते सा ॥
न कर्त्ता क्रियायाः कदाचिच्चिदात्मा
सुरेशोऽर्जुनायाऽऽह गीतासु कृष्णः ॥ १२३ ॥

शरीरादीति ॥ स्पष्टार्थः ॥ २३ ॥

एवं स्वानुभवेन शास्त्रतश्चाऽकर्तृत्वं निश्चित्य कालत्रये ऽपि न कर्मकर्त्ताऽस्मीत्याह—

अकार्षं न कर्त्ता करिष्येऽहमेत-
त्त्रिधा यच्चतुर्धा च कर्माऽस्ति शास्त्रे ।
विभुत्वादसङ्गत्वहेतोर्न कर्म-
प्रलेपो ऽपि मे निश्चयः सर्वथैव ॥ १२४ ॥

अकार्षमिति ॥ विभुत्वादसङ्गत्वाच्च हेतोः कारणादहं न कर्माऽकार्षमिदानीं न कर्त्ता पुरो ऽपि च न करिष्य इत्यन्वयः। तच्च कर्म कतिविधमित्यपेक्षायामाह । तत्त्रिधा कायिकं वाचिकं मानसञ्चेति । तदपि प्रत्येकं कर्माऽकर्मविकर्मरूपमेवं त्रिधेत्यर्थः। सात्त्विकं राजसं तामसञ्चेति वा । चतुर्धेति । तथा विहितनिषिद्धा विहिताऽनिषिद्धरूपं चतुर्धेत्यर्थः। यद्वोत्पाद्यमाप्यसंस्कार्यविकार्य-भेदेन चतुर्धाऽपीत्यर्थः। तत्र विहितं सन्ध्योपासनादि निषिद्धं पलाण्डुभक्षणादि अविहितं रागतः प्राप्तं भोजनादि अनिषिद्धम् शौचादीत्यर्थः ॥ १२४ ॥

एवं प्रसक्ताऽनुप्रसक्तं समाप्य पुनस्त्वम्पदलक्ष्यमात्मानं दर्शयति—

जाग्रत्स्वप्नसुषुप्तिकासु यदनुस्यूतं च तत्सिद्धिकृत्
चैतन्यं सततं तुरीयममलं तत्प्रत्यभिज्ञाबलात् ॥
प्राप्तं ज्योतिरनंतमुत्तमतमं स्वानन्दपूर्णं पदम्
वेदान्तैः प्रतिपादितं च गुरुभिस्तन्मे स्वरूपं हरेः ॥१२५॥

जाग्रदिति ॥ जाग्रदादितिसृष्ववस्थासु यदनुस्यूतं चैतन्यं तत्प्रत्यभिज्ञाबलात्प्राप्तमित्यन्वयः। योऽहं गाढं मूढं अस्वाप्सं स्वप्नमद्राक्षं च सोऽहमेवेदानीं जागर्मि इति प्रत्यभिज्ञाप्रमाणबलाल्लब्धं तत्सततं तुरीयं ज्योतिरनन्तम् नित्यम् उद्गतं तमोऽज्ञानं यस्मात् तदुत्तमं तदेव प्रकृष्टमुत्तमतममित्यर्थः। अत एव स्वानन्दपूर्णं स्वस्य भूत आनन्दः स्वानन्दः स्वानन्देन पूर्णमखण्डितैकरसत्वात्। एतादृशं पदं हरेः हरत्यविद्यातत्कार्यं स्वज्ञानप्रदानेनेति हरिः तस्य विष्णोः पदं गुरुभिर्वेदान्तैश्च करणीभूतैः प्रतिपादितं तन्मे स्वरूपं मूलरूपमित्यर्थः।

भातस्य कस्यचित्पूर्वं भासमानस्य साम्प्रतम्।
सोऽयमित्यनुसंधानं प्रत्यभिज्ञानमुच्यत इति ॥

प्रत्यभिज्ञानलक्षणम्। न चेदं षट्प्रमाणेष्वनाधिगतत्वान्न प्रमाणमिति वाच्यम्। तत्र तदंशे स्मरणमिदमंशे प्रत्यक्षं तथा च स्मरणप्रत्यक्षोभयात्मकत्वेन प्रत्यक्षान्तरगतत्वात्प्रत्यक्षविशेषो नाऽतोऽस्याऽप्रमाणशङ्का विधेयेति भावः ॥ १२५ ॥

स्वानन्दपूर्णपदमित्युक्तं तत्र पूर्णत्वं दर्शयति—

यो व्यष्ट्युपाधौ च समष्ट्युपाधौ
समः शुचिः शान्ततमश्चिदंशः ॥
तमेकमादाय जडांशहाना-

ञ्छिष्टश्चिदंशो मम तत्स्वरूपम् ॥ १२६ ॥

यद्गति ॥ स्थूलसूक्ष्मकारणरूपाःव्यष्टयः विराट्सूत्रा व्याकृताख्याः समष्टय उपाधिविशेषास्तत्र प्रतिफलिताः सम एकरसस्त्वाद्वैपम्यरहितः शान्ततमः निस्तरङ्गसमुद्र इवाक्षोभ्यश्चिदंशश्चैतन्यम् । तमेकस्वभावं तमेवैकरूपं आदाय जडांशा उपाधयस्तेषां हानाल्लक्षणया त्यागात् शिष्टो यश्चिदंशो ऽखण्डैकरसस्तत्परमार्थतो मम स्वरूपमित्यर्थः । एवं स्वानन्दपूर्णं मम स्वरूपमिति भावः १२६ ॥

ननु जडांशहानमुक्तं तन्न सम्भवति तस्य सत्यत्वेन युक्तमत्यक्यत्वान्नहि सत्यं निवर्त्तत इति न्यायादित्याशङ्क्य तेषां कल्पितत्वमाह श्लोकद्वयेन—

भूच्छिद्रगोमूत्रभुजङ्गमाना-
मनात्मनां रज्जुरसौ यथात्मा ॥
तथा शरीरेन्द्रियमारुताना-
मात्माहमेको मयि कल्पितास्ते ॥ १२७ ॥

भूच्छिद्रेति ॥ अत्रेदमनुमानं सूचितं विवादाध्यासिता विशेषाः स्वानुस्यूते वस्तुनि कल्पिताः प्रत्येकं तदनुविद्धत्वात् । ये येन प्रत्येकमनुविद्धास्ते तत्र परिकल्पिताः । यथा भूच्छिद्रसर्पमालादण्डधारावलीवर्दमूत्रादयः स्वानुस्यूते रज्ज्वां इदमंशे तथा च ते तस्मात्तथा एवं पञ्चकोशेष्वऽपि द्रष्टव्यं स्पष्टोर्थः ॥१२७॥

ये पञ्चकोशाः श्रुतिषु प्रसिद्धा
अकोशभाजो ऽपि विभोः परस्य ॥
ते पञ्चकोशा मयि कल्पिताःस्यु-

एतद्ब्रह्मपुच्छं परमं सदस्मि ॥ १२८ ॥

यदिति ॥ "स वा एष पुरुषोऽन्नरसमय" इत्यादिना तैत्तिरीयश्रुतावन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्चकोशा उक्ताः। कोशवदाच्छादकत्वात् कोशास्ते मयि कल्पिताः स्युः। कुत इत्यत आह ।-यतो ब्रह्मपुच्छन्नाम पञ्चकोशानामाधारभूतं सर्वकल्पनाधिष्ठानं यत्तदहमस्मीत्यतो मयि कल्पिता इत्यर्थः ॥१२८॥

अथ सर्वशरीरेष्वेक एवाऽऽत्मेति प्रतिपादयति—

ममाऽत्रदेहे सकलार्थभासकम्

शान्तं समं ज्योतिरसंगमुत्तमम् ॥

तदेव सर्वत्र तथैव भासकम्

ज्योतिः स्वयंज्योतिरयं यथा रविः ॥ १२९ ॥

ममाऽत्रेति ॥ आत्मनो मध्यमपरिमाणत्वे नित्यत्वं न स्यात् अणुत्वे सकलदेहव्याप्तसुखाद्यनुपलब्धिः स्यात् । अतो विभुत्वे सर्वत्र द्रष्टृकार्यत्वात्सर्वशरीरेष्वेक एवात्मेति भावः । "स वा एष महानजआत्मेति" श्रुतेः आत्मनो विभुत्वं द्रष्टव्यम् ॥ १२९ ॥

उक्तार्थे चोद्यं प्रदर्श्य समाधत्ते—

नैकस्य दुःखेन समस्तजीव-

दुःखप्रतीतिः परिशंकनीया ॥

उपाधिचितस्थविकर्मपाकाद

दुःखं तु तस्यैव न चेतरेषाम् ॥ १३० ॥

नैकस्येति ॥ अयमर्थः सूत्रकृताऽपि दर्शितः । तत्र ताव-

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० सं० (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीत-
वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-
भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। (वेदान्त.) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-
परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६
श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् (वेदान्तः) १०

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा-
रकाचार्यसंगृहीतः। आचार्यचित्सुख-
मुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादि-
सप्तविभक्तिविस्तृतविचाररूपः म० म०
श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्ट-
सोमेश्वरविरचिता। (मीमांसा) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता।
श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्त.) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशा-
ध्यायार्थसंग्रहः) श्रीभट्टनारायणात्मज-
भट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि-मीमांसादर्शनम्) महामहो-
पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-
सारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-
स्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का-
चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् (वेदान्त) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण-
विरचितया खण्डनफक्किकाविभजनाख्यया व्या-
ख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। (वेदान्तः) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया-
ऽलंकारमञ्जूषया च सहितम्। ८

१४ ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त)

१५ क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्र
त्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्द
शक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि। (न्याय)

१६ ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टविरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवा
चार्यकृतसिद्धान्तजाह्नवीयुतम्

१७ षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः। मणिभद्र
टीकया सहितः। हरिभद्रसूरिकृतः।

१८ शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवश्च

१९ अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका।

२० वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः।

२१ वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः

२२ स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः।

२३ वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता।

२४ प्रस्थानरत्नाकरः। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः

२५ वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम्।

२६ योगदर्शनम्। परमहंसपरिव्राजकाचार्य नारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिका-सम
ख्यया संवलितम्।

२७ वेदान्तदर्शनम्। परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वती स्वामिकृत ब्रह्मामृतवर्षिणी
समाख्य व्याख्यासंवलितम्।

२८ विश्वप्रकाशः। कोशः। विद्वद्वर श्रीमहेश्वरसूरिविरचितः।

२९ श्रीसुबोधिनी। श्रीवल्लभाचार्यविनिर्मिता। श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षि
तविरचित टिप्पणीसहिता।

३० वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः।

३१ वेदान्तसिद्धान्तसंग्रहः। श्रुतिसिद्धान्तापरनामकः। श्रीब्रह्मचारिवनमालिमिश्रविरचितः। द्वैता
द्वैतदर्शनानुगतः।

३२ स्वानुभवादर्शः। श्रीमत्परमहंसपरिव्राजकाचार्य नारायणाश्रमशिष्यमाधवाश्रमविरचितः
स्वकृतटीकाविभूषितश्च।

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस, सिटी,

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 256.

# स्वानुभवादर्शः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्य
नारायणाश्रमशिष्यमाधवाश्रम-
विरचितः ।

स्वकृतटीकाविभूषितश्च
सीतारामशास्त्रिणा परिशोधितः ।

# SVÂNUBHAVÂDARSA

WITH A COMMENTARY BY
MÂDHAVASRAMA PUPIL OF
NÂRÂYANASRAMA,
Edited by
Sita Ram Sástri Senday.

FASCICULUS II—?

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES
AGENTS OTTO HARRASSOWITZ LEIPZIG
PANDITA JYESHTHARAMA-MUKUNDAJI, BOMBAY
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares*

1917
*Price Rupee one*

दाशङ्का सर्वशरीरेषु कर्मकर्तृचैतन्यस्यैकत्वादेकदेवदत्तशरीराव-च्छेदेन कर्मकरणे धर्मादिकं यज्ञदत्तशरीरावच्छेदेनाऽपि स्यादित्यत आह । "असन्ततेश्चाव्यतिकरः" इदं सूत्रम् । अस्याऽर्थः । परिच्छिन्नान्तःकरणोपाधिकस्य कर्तुःपरिच्छिन्नस्य देवदत्तात्मनो यज्ञदत्तशरीरेणाऽसन्ततेरसम्बन्धाद्धर्मादेरव्यतिकरः। देवदत्तस्य यज्ञदत्तशरीरावच्छेदेनाऽपि धर्मादिप्रसङ्गो नाऽस्तीत्यर्थः। "तथैव आभास एव चेति" सूत्रम् । अस्यार्थः । यथा ऽनेकघटजलप्रतिबिम्बानां मध्ये एकस्मिन्सूर्याऽऽभासे कंपमाने सूर्याऽभासान्तरं न कम्पते एवमीश्वराऽऽभास एवाऽयं जीव इति नैकस्मिन्जीवे धर्मादिसम्बन्धिधाने जीवान्तरस्य धर्मादिसम्बन्धस्तत्फलभूतः सुखदुःखादिसम्बन्ध इत्यर्थः । अयमर्थो गौडपादाचार्यैरप्युक्तः—

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
न सर्वे प्रतिपद्यन्ते तद्वज्जीवाः सुखादिभिरिति ।
तस्मात्सर्वशरीरेष्वेकएवाऽऽत्मेतिसिद्धम् ॥ १३० ॥

चैतन्यसत्तासन्निधिभ्यामेव सर्वकरणव्यापार इत्याह—

मत्सन्निधानान्मम सत्तया च
स्वगोचरार्थं करणानि देहात् ॥
चलन्ति हि भ्रामकसन्निधाने
लोहं स्वयं दूरगतं यथैव ॥ १३१ ॥

मत्संनिधानादिति । स्पष्टार्थः ॥ उक्तञ्च
निमित्तं मन श्चक्षुरादिप्रवृत्तौ
निरस्ताऽखिलोपाधिराकाशकल्पः ॥
रविर्लोकचेष्टानिमित्तं यथा यः
स नित्योपलब्धिस्वरूपोऽहमात्मेति ॥ १३१ ॥

येनाऽऽत्मनाऽत्र व्यवहारसिद्धिः
पश्यन्न तं पश्यति पण्डितोऽपि ॥
केयं महाभ्रान्तिरहो कुतोऽस्या
नाऽऽन्तो न चादिर्न च संप्रतिष्ठा ॥ १३२ ॥

येनेति ॥ योऽहमस्वाप्सं स्वप्नमद्राक्षं सोऽहञ्जागर्मि इति प्रत्यभिज्ञया ऽनुसन्धातृचैतन्यं पश्यन्नपि तेन व्यवहरन्नपि तदेव तुरीयत्वेन पण्डितोऽपि शास्त्रज्ञोपि न पश्यति कुतः सर्वजन इत्यर्थः । अहो इत्याश्चर्ये । केयं महाभ्रान्ति कुतश्चेत्यर्थः । शेषं स्पष्टम् ॥ १३२ ॥

एवं मुञ्जादिषीकान्यायेन त्वम्पदलक्ष्यमात्मानमुद्धृत्य तत्र वादिविप्रतिपत्तिजं संशयं निराकरोति—

किं गौतमीयैः कणभुग्वचोभि-
र्नाऽऽत्मा गुणी नापि गुणा यथार्थाः ॥
सच्चित्सुखात्मन्यथ निर्विशेषे
गुणा न सन्त्येव सुखादयो ये ॥ १३३ ॥

किमिति ॥ अथ शब्दः पूर्वोक्तानन्तर्यार्थः । श्रुत्यनुभवविरुद्धत्वात्प्रमाणाऽऽभासरूपैः कणभुग्वचोभिः किम् । न किञ्चिदित्यर्थः । तथा गौतमीयैर्वचोभिरिति शेषः । "निर्गुणं निष्क्रियं शान्तमिति" श्रुतेः । नाऽऽत्मा गुणीत्यर्थः । शेषं स्पष्टम् ॥ १३३ ॥

एतदेव द्रढयति—

इच्छादयो ये परिकल्पिता गुणा
बुद्धेस्तु ते नात्मन एष निश्चयः ॥

विज्ञानमानन्दमितिश्रुतेश्च-
तथा प्रमाणं खलु काम इत्यपि ॥ १३४ ॥

इच्छादयइति ॥ "कामः सङ्कल्पो विचिकित्सेत्यादिश्रुतेः ।. नेच्छादय आत्मधर्मा गुणा इत्यर्थः ।

इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।'

एतत्क्षेत्रमितिस्मृतेश्च ।

तथा च श्रुतिस्मृतिविरुद्धत्वादुभयवादिमतमप्रमाणमितिभावः १३४ ॥

किञ्च,—

यद्यात्मनि त्वं सुखदुःखराग-
प्रयत्नधर्मादिगुणान्ब्रवीषि ॥
सुषुप्तिकालेऽनुभवो न तेषा-
मात्मा तदानीं तत्र निर्विशेषः ॥ १३५ ॥

यदीति ॥ तदुक्तमाचार्यैः ।

रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्त्तते ।

सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नाऽऽत्मन इति ।

न च सुषुप्तावात्ममनःसंयोगाभावान्न ज्ञानाऽऽदिगुणाभिव्यक्तिरितिवाच्यम् । आत्ममनःसंयोगस्यैवाऽघटमानत्वाद् आत्ममनसोर्निरवयवत्वाभ्युपगमेन संयोगो न सम्भवति । तस्याऽव्याप्यवृत्तित्वाङ्गीकारान्न हि निःप्रदेशे संयोगः सम्भवतीति । "यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य सम्पन्नो भवतीति" श्रुतेः । तदानीं निर्विशेषात्मेति ॥ १३५ ॥

किञ्च—

आत्मान्यत्वादंतरिक्षं मनोऽणु
नैते नित्या मेदिनीवत्तथाऽन्ये ॥
यद्वानित्यं तन्मृषा नैव सत्यम्
न्यायात्सिद्धं शुक्तिरौप्येण तुल्यम् ॥ १३६ ॥

आत्मेति ॥ अत्राऽयं प्रयोगः । आकाशमनःपरमाणवोऽन्येऽपि पदार्थाः न नित्या आत्मान्यत्वात् मेदिनीवत् । एवमनुमानेनाऽनित्यत्वसिद्धौ तेनैव हेतुना मृषात्वं साधयति । यद्वेति । आकाशादिप्रपञ्चो मिथ्या अनित्यत्वाच्छुक्तिरजतवदिति ॥ १३६॥

किञ्च—

आकाशादेर्नित्यता कल्प्यते चे-
देकज्ञानात्सर्वभानप्रतिज्ञा ॥
वेदे नोक्ता सद्भिरुक्ता विचारा-
त्तस्या हानिः सा च नेष्टा द्विजानाम् ॥ १३७॥

गे सति मण्यादिसमवधाने दाहानुत्पत्त्या तदपनये दाहोत्पत्त्या च वह्नौ दाहाऽनुकूलशक्तिविनाशोत्पत्त्योरावश्यकत्वेन शक्तिसिद्धेः। न च प्रतिबन्धकाभावेन दाहोत्पत्त्युपपत्तौ कथं सिद्धिरिति वाच्यम् । प्रतिबन्धकाभावस्य दाहकारणत्वे मानाभावात् । तदन्वयव्यतिरेकयोः कार्यानुत्पादस्या ऽग्रिमसमयसम्पादकत्वेना ऽन्यथासिद्धत्वात् । कथम् । "असतः सज्जायत इति" श्रुत्या ऽसतोऽदृष्टत्वादितिन्यायेन चाऽभावकारणत्वस्य निराकृतत्वाच्च। तस्मात्कारणे कार्याऽनुकूला शक्तिरभ्युपगन्तव्या असतोऽभावात् कार्योत्पत्तिर्न युक्ता अदृष्टत्वादितिन्यायार्थः । एवं च चन्द्रवन्मुखमित्याद्यनुभवात्सादृश्यसिद्धिस्तस्मात्षट्पदार्था इत्यसंङ्गतम्।किञ्च द्रव्याणि नवैवेत्यसङ्गतम् । अन्धकारस्य दशमद्रव्यस्य सत्त्वात् । नचाऽन्धकारस्यालोकाऽभावतया कथं द्रव्यत्वमिति वाच्यम् । प्रतियोगिनिरपेक्षतया प्रतीयमानस्याऽभावत्वकल्पनायां मानाभावात्। नीलं तमश्चलतीति प्रत्यक्षप्रतीत्या रूपादिमत्वेन तस्य द्रव्यत्वोपपत्तेश्च । तस्माद्द्रव्याणि नवैवेत्यनुपपन्नमिति ॥ १३७ ॥

केचिद्ब्रह्मणो गुणित्वं वदन्ति तन्न सम्भवतीत्याह—

सत्यं सत्यगुणं वदन्ति भगवद्ब्रह्मेति केचिद् बुधाः
ज्ञानं ज्ञानगुणं सुखं सुखगुणं व्याख्या श्रुतेर्नेदृशी ॥
सामानाधिकरण्यमत्र गदितं तद्धीयते ऽतो न त-
त्वेवं कल्पनके प्रमाणमपि नो तस्माद् गुणित्वं न हि।१३८।

मस्यामिति ॥ भगो विद्यते यस्य तद्भगवत् ।
ऐश्वर्यस्य समग्रस्य ज्ञानस्य यशसः श्रियः ।
वैराग्यस्या ऽथ मोक्षस्य षण्णां भग इतीरिणा ।

एवं निरूपितं भगवत्वं मायोपहितचैतन्येश्वरस्य । न शुद्धस्येति सूचितम् ॥ तथाच । भगवद् ब्रह्मेति कोचिद् वदन्ति तदपि नेति विशेषणीभूतभगवच्छब्देन सूचितम् । ननु शुद्धस्याऽपि सच्चिदानन्दस्वरूपवदैश्वर्यमपि तत्स्वरूपमस्त्विति चेन्न । श्रुतिषु ऐश्वर्यवर्णनं कृत्वा पश्चान्नेति नेति तन्निषिध्यते ऽतो नैश्वर्यादिकं शुद्धस्वरूपमिति । शेषं सुगमम् ॥ १३८ ॥

सांख्यास्तु सत्त्वपुरुषान्यतया हि मोक्षम्
ज्ञानेन चाहुरिति तं न मतं विमानम् ॥
तत्त्वंपदार्थपरिशोधनसाधनाय
युक्तं भविष्यति न मुक्तिसुसाधनाय ॥ १३९ ॥

सांख्यास्त्विति ॥ विगतं मानं यस्मादिति विमानमप्रमाणमित्यर्थः । सत्त्वपुरुषयोरन्यत्वेन विवेकेन यज्ज्ञानं तेन ज्ञानेन मोक्षमाहुस्तन्न संभवतीत्यर्थः । तथा च सांख्यसूत्रे "तद्विपरीतः श्रेयानिति" तस्मादानुश्रविकाद्दुःखोपघाताद्धेतोःविपरीतः सत्त्वपुरुषान्यतासाक्षात्कारो दुःखोपघातको हेतुरत एव श्रेयानित्यर्थः । त्रिगुणात्मकप्रकृतिसत्त्वगुणाद्विवेके सति तदुपलक्षितान्यतत्त्वविवेचनेन इदमेव त्वंपदशोधनमस्मन्मते । तत्र सांख्यमतमुपयोक्ष्यत इति भावः । शेषं सुगमम् ॥ १३९ ॥

श्रुतिस्मृतिन्यायजनेषु सिद्धम्
सर्वेश्वरं ये न भजन्ति सांख्याः ॥
मीमांसकाः कर्मरताश्च तेषामनीश्वराणां न मुखं विलोक्यम् ॥ १४० ॥

जाने न जाने ऽहमितिप्रतीते-
र्जडाऽजडात्मानमुवाच भट्टः ॥
द्विरूपतैकस्य न वस्तुतः स्या-
त्कदाऽपि कुत्राऽपि न दृष्टमेतत् ॥ १४१ ॥
पातञ्जलं योगमृते समस्तम्
सांख्येन तुल्यं परिहार्यमेव ॥
यो योग उक्तः स तु चित्तवृत्ति-
निरोधरूपः खलु कर्म चैतत् ॥ १४२ ॥

श्रुतीति" एष सर्वेश्वर एवान्तर्याम्येष योनिरित्यादिश्रुतयः। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठतीत्यादिस्मृतयः ॥ क्षित्यादि-सकर्तृकं कार्यत्वादिति न्यायः । दुःखिता ईश्वरं स्मरन्तीति जनाः। एव श्रुतिस्मृतिन्यायसिद्धमित्यर्थः। शेषं स्पष्टम्॥ १४० ॥ ॥ १४१ ॥ १४२ ॥

नन्वस्तु कर्मणा मोक्ष इत्यत आह—

ज्ञानेन मोक्षः श्रुतिलोकसिद्धो
न कर्मणा जन्यतया ह्यनित्यः ॥
शिष्टैः समस्तैरपरिग्रहेण
दुस्तार्किकाणां न मतं सुचारु ॥ १४३ ॥
ये द्वासुपर्णेतिवचोबलेन
जीवेशयोर्भेदमुशन्ति मन्दाः ॥
जीवस्य भोक्तृत्वमथेश्वरस्य

नास्तीति तात्पर्यमिदं श्रुतेर्हि ॥ १४४ ॥

ज्ञानेनेति ॥ साद्धश्लोकेन पातञ्जलमतं न युक्तमित्युक्तम् ॥ १४३ ॥ १४४ ॥

जीवेश्वरजगद्भेदखण्डनाय सर्ववेदान्तानां भट्टाचिरतस्तदुपयुक्तं जीवेश्वरभेदखण्डनं सङ्क्षेपेण क्रियते—

वैराग्यबोधाय हि कामिनां त-
दज्ञानिनां सा श्रुतिराह माता ॥
सा ऽहंकृतिस्त्वान्निरहंकृतेस्त-
दीशस्य नाऽस्तीत्यभिसन्धिरत्र ॥ १४५ ॥

यद्वेति ॥ वैराग्यबोधायेति । अत्र श्रुतावभिसन्धिर्गूढाभिमाय इत्यर्थः । शेषं स्पष्टम् ॥ १४५ ॥

किञ्च—

बह्वीभिरन्याभिरभेदबोधे
बलीयसीभिः श्रुतिभिर्विरोधात् ॥
उपेक्षणीया ऽनवकाशहेतो-
रतासां श्रुतीनां च विचारणेन ॥ १४६ ॥

बह्वीभिरिति ॥ "तत्वमसी" "अहं ब्रह्मास्मि" इत्याद्यनेकश्रुतिभिःसह विरोधाद्यथोक्तविषयदानेन सा श्रुतिरुपेक्षणीया। "त्यजेदेकं कुलस्यार्थे " इतिन्यायादित्यर्थः । चेत्यपरम् " सावकाशनिरवकाशयोर्मध्ये निरवकाशं बलीय " इतिन्यायेन पूर्वश्रुतिर्वैराग्यबोधने सावकाशा। अन्यासां श्रुतीनां निरवकाशत्वाद्बलीयस्त्वमित्यभिमायः ॥ १४६ ॥

ब्रह्मात्मनोर्भेदो न प्रमाणसिद्ध इत्यत आह। तत्र तावत्प्रत्य-क्षेण न तत्सिद्धिरित्याह—

ब्रह्मात्मानौ चक्षुरादेरयोग्यौ
नाऽतो भेदस्तद्गतस्तेन सिध्येत् ॥
लिङ्गं किञ्चिन्निर्विशेषस्त्वहेतो-
स्ताभ्यां व्याप्तं नैव तत्र प्रतीमः ॥ १४७ ॥
भेदे विना काऽनुपपत्तिरस्ति
यतोऽत्र भेदः परिकल्पनीयः ॥
जीवेशयोर्वास्तवभिन्नतायाम्
मानं न किञ्चित्परिदृश्यतेऽतः ॥ १४८ ॥

ब्रह्मेति ॥ स्पष्टार्थौ श्लोकौ ॥ १४७ ॥ १४८ ॥

किञ्च। तर्कस्तावत् मानोऽनुग्राहकत्वात् न स्वतः प्रमाणम्। येनाऽप्रतिष्ठिततर्केण मानोच्छेदः स्यात् तादृशस्तर्को नानुसन्धेय इत्याह। तर्कइति। अत्र पूर्वाऽर्द्धेन तर्कस्य स्वतोऽप्रामाण्यमुक्त्वो-त्तरार्द्धेन तत्स्वरूपमाह—

तर्कोऽप्रतिष्ठो न हि येन मानो-
च्छेदः समायाति तथा विचिन्त्यः ॥
भ्रमप्रमाभ्यां सुविलक्षणा धी-
र्वृत्तिः स तर्कः खलु कामवृत्तिवत् ॥ १४९ ॥

भ्रमेति ॥ कामादिवृत्तिवद् भ्रमप्रमाविलक्षणा मनोवृत्ति-स्तर्क इत्यर्थः ॥ १४९ ॥

जीवेश्वरयोर्भेदे श्रुत्युक्तबाधं दर्शयति—

उदरमन्तरकं कुरुते यदा

भवति तस्य भयं श्रुतिशासनात् ॥

कथमयं भवभीतिपरम्पराम्

परिहरिष्यति भेदविशालधीः ॥ १५० ॥

उदरमिति ॥ "यदाह्येवैष एतस्मिन्नुदरमन्तरङ्कुरुते अथतस्य भयं भवतीति" तैत्तिरीयश्रुतेः ॥ १५० ॥

किंच—

जीवाद्भिन्नं ब्रह्म युष्मन्मते चे

न्नित्यत्वं यद्ब्रह्मणस्तस्य हानिः ॥

यद्यजीवाद्भिद्यते तच्च तद्वा-

नित्यं ह्येषा व्याप्तिरस्मन्मते ऽस्ति ॥ १५१ ॥

जीवादिति ॥ ब्रह्म यदि जीवात् भिन्नं तर्ह्यनित्यं भवितुमर्हति जीवचैतन्यान्यत्वात् घटादिवदिति । युष्मन्मतमनुमानप्रमाणबाधितमितिभावः । जीवब्रह्माऽभेदसाधकस्य ब्रह्म यदि जीवाद्भिन्नं स्यात् तर्ह्यनित्यं स्यादित्यनुकूलतर्कोऽप्यनुसन्धेयः॥१५१॥

किञ्च—

यस्याभासो व्यापकस्याऽस्त्युपाधौ

तस्माद्भिन्नो नैव तस्मात्स एव ॥

यद्वद्व्योमाभासतः खं न भिन्न-

मेवं व्याप्तेर्नास्ति जीवेशभेदः ॥ १५२ ॥

यस्येति ॥ १५२ ॥

प्रत्यक्षसिद्धस्य भेदस्य श्रुतिरौपाधिकत्वं दर्शयतीत्याह—

यथा ह्ययं ज्योतिरितिश्रुतिस्त-
मौपाधिकं भेदमुवाच देवी ॥
एकं मुखं दर्पणतो विभिन्नम्
कथं द्वितीयं परमार्थतः स्यात् ॥ १५३ ॥

यथेति । श्रुतिस्त्वेवं पठ्यते । "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवक्षेत्रेष्वेवमजोऽयमात्मा ।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।

जीवेशावाभासेन करोति माया चाऽविद्या च स्वयमेव भवतीति तापनीय इति" श्रुतिमुदाहार्य युक्तिमप्युदाहरति । एकं मुख-मिति ॥ १५३ ॥

किञ्च—

उपाधिसत्त्वात्प्रतिबिम्बसत्त्व-
मित्यन्वयेन व्यतिरेकतश्च ॥
लोकप्रसिद्धं च तथैव वेदा-
त्कथं नु सत्यः प्रतिबिम्ब एषः ॥ १५४ ॥

उपाधीति ॥ वेदाच्छ्रुतेश्चान्वयव्यतिरेकौ ज्ञेयौ । तथा च बृहदारण्यके श्रूयते । "अर इदं महद्भूतमनन्तमपारं विज्ञान-घन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यतीति" ।

श्रुत्यर्थस्तु अरे मैत्रेयि विलीनखिल्यभावमिदं ब्रह्माऽतत्त्वं महद्न वच्छिन्नभूतं कूटस्थम् अनन्तं न विद्यते अन्तः कारणं पूर्वाऽवधिभूतं यस्य तदनन्तम्, अपारं न विद्यते पार उत्तराऽवधिभूतं कार्यं यस्य तदपारम्, विज्ञानघन एव विज्ञप्तिर्विज्ञानं घनो जात्यन्तरानुविद्धस्वभावः । विज्ञानं चाऽसौ घनश्चेति विज्ञानघनो विशुद्धज्ञानमात्रैकरस एवाऽऽत्मा । एतेभ्यो भूतेभ्यो शरीरकरणविषयाकारपरिणतेभ्यो निमित्तभूतेभ्यो मनुष्योऽहं ब्राह्मणोऽहमित्यादिस्वल्पभावेन समुत्थाय जलचन्द्रादिप्रतिबिम्बवत्तत्र मकटीभूय तानि स्वल्पभावसम्पादकानि भूतानि विनश्यन्ति सन्ति अनु पश्चादुदकाद्यपगमे चन्द्रादिप्रतिबिम्बवत्स्वल्पभावो विनश्यति । तथाच विद्यातत्कार्यरूपस्वल्पहेत्वपगमे प्रत्यगात्मा परमात्मैकत्वेन संसारधर्मानास्कन्दितोऽनन्तोऽपारो ज्ञप्तिमात्रस्वरूप एवेत्यर्थः ॥ १५४ ॥

प्रतिबिम्बस्यानिर्वचनीयत्वं दर्शयति—

न बिम्बधर्मो न च वाऽप्युपाधे-
र्न चोभयस्याऽपि तथा न भानात् ॥
न सन्न चाऽसन्नुभयं विरोधा-
त्तस्मात्स्वरूपं न हि वस्तुतोऽस्य ॥ १५५ ॥

किञ्च नबिम्बेति ॥ तथा न भानात् तथाऽननुभवादित्यर्थः ॥ १५५ ॥

अपिच—

भगवत्प्रतिबिम्ब एष जीवः
श्रुतिसिद्धो ऽत्र विगानमस्ति नैषत् ॥

वत कल्पितमेव तत्स्वरूपम्,

न हि तेनाऽस्य विभिन्नता यथा ॥ १५६ ॥

भगवदिति ॥ "रूपं रूपं प्रतिरूपो बभूवेति" श्रुत्या भगवत्प्रतिबिम्बो जीवो दर्शितस्तस्य च स्वरूपं वत खेदे कल्पितमेव। हि अतस्तेना ऽस्य ब्रह्मणः विभिन्नता भिन्नभावो न युक्तः ॥ १५६ ॥

किञ्च श्रुत्यन्तरप्रामाण्याच्च जीवेशयोर्भेद इत्याह—

नाऽन्योऽतोऽस्तीत्यादिर्वेदे निषेधा-

द्द्रष्टुर्भेदो नाऽस्ति सिद्धान्त एषः ॥

तस्माज्जीवेशानयोर्भिन्नतां ये

ब्रूयुस्ते वै वेदबाह्या भवन्ति ॥ १५७ ॥

नान्य इति "नाऽन्यदतोऽस्ति द्रष्टृ नाऽन्यदस्तोऽस्ति श्रोतृ नाऽन्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रित्यादिश्रुतौ द्रष्टान्तरनिषेधात्र जीवेशयोर्भेद इत्यर्थः ॥ १५७ ॥

किञ्च श्रुतिरुपाधिना बहुधा सन्तं परमार्थत एकधेत्याह—

इन्द्रंमित्रमितिश्रुतिर्हि बहुधा संतं वदत्येकधा

तस्माद्भेदमतिं विहाय कृपणामेकं हरिं स्वीकुरु ॥

आकाशं हि यथास्वरूपविलयाद्भिन्नं भवेन्न स्वत-

स्तद्वद् ब्रह्म परं स्वरूपविलयाद्भिन्नं भवेन्न स्वतः॥ १५८॥

इन्द्रं मित्रमिति ॥

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥

इतिऋक्शाखीयश्रुतिः ॥ तथा कठवल्लिषु श्रूयते ।

"एको वशी सर्वभूताऽन्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामिति" ।

तमात्मस्थं स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाऽभिव्यक्तं नहि शरीरस्याऽऽधारत्वमात्मनः सम्भवति आकाशवद मूर्त्तत्वादादर्शस्थमुखमिव तद्वदित्यर्थः । इकारः पादपूरणार्थः । आकाशमिति । अत्रेदमनुमानं सूचितम् । आत्मा न स्वतो भिद्यते सोपाधिपरामर्शमन्तरेणाऽविभाव्यमानभेदत्वादाकाशवदित्यर्थः ॥ १५८ ॥

किञ्च—

सतोर्हि भेदः परिकल्पनीयो
नाऽसत्सतोर्वास्तवभिन्नता स्यात् ॥
गङ्गोदकस्या ऽथ मृगोदकस्य
भेदः कथं वास्तवतामुपैति ॥ १५९ ॥

सतोरिति ॥ १५९ ॥

किञ्च यद्ब्रह्मलक्षणं तत्प्रतीच्येव पर्यवसन्नमतोऽपि न भेदावसर इत्याह—

यद्ब्रह्मसाक्षादपरोक्षमुक्तं
श्रुतौ य आत्मेति च लक्षणं यत् ॥
प्रतीचि तद्वस्तत एव कस्मा-
ज्जीवेशयोर्भेदममी वदन्ति ॥ १६० ॥

यदिति ॥ यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतरः

तं मे व्याचक्ष्वेति श्रुतौ ब्रह्मापरोक्षस्वभावमुक्तं तत्प्रतीचि वर्तते अतो न भेदशङ्केत्यर्थः ॥ १६० ॥

त्रिविधभेदशून्यत्वरूपमखण्डत्वं स्वात्मनो दर्शयति—

प्रपञ्चमिथ्यात्वसुदर्शनेन
न मे विजातीयकृतो ऽस्ति भेदः ॥
ब्रह्मात्मनोरैक्यसुदर्शनेन
न मे सजातीयकृतो ऽस्ति भेदः ॥ १६१ ॥

प्रपञ्चेति ॥ १६१ ॥

प्रज्ञाघनत्वात्स्वगतो ऽपि भेदो
नेपत्स्वतो ऽप्येकरसस्वभावात् ॥
तस्मादखण्डं परमात्मवस्तु
तदेव चाऽहं न हि भेदलेशः ॥ १६२ ॥

प्रज्ञेति । लोके वृक्षशिलानां विजातीयभेदः प्रतीयते वृक्षावृक्षस्य सजातीयभेदः पत्रपुष्पादीनां स्वगतो भेद एवं परमात्मनि नास्तीत्यर्थः । "यथा सैन्धवघनो ऽनन्तरो बाह्यः कृत्स्नो रसघन एवं वा अरे ऽयमात्माऽनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एवेति" श्रुतेः । प्रज्ञानघनत्वान्न स्वगतो भेद इत्यर्थः । प्रकारान्तरेण भेदत्रयं ज्ञात्वा निरसनीयम् । भोक्तृवर्गस्य परस्परभेदः सजातीयभेदः । भोग्यप्रतियोगिको भेदो विजातीयभेदः । तत्तत्सुखादिमत्त्वेन भेदः स्वगतो भेद इति । अथवा जीवेश्वरभेदो जीवजगद्भेदो जीवपरस्परभेद इतिपञ्चविधो वस्तुपरिच्छेद इति ॥ १६२ ॥

किञ्च—

ब्रह्माहमस्मीति च वाक्यशेष-

इदं स सर्वं भवतीति वाक्यम् ॥

तस्मान्न भोक्ता न च योग्यमीष-

दप्रतीयते भिन्नतया स्वरूपात् ॥ १६३ ॥

ब्रह्मेति ॥ "य एवं वेदाऽहं ब्रह्मास्मीति सइदꣳसर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳसम्भवतीति" स्वतःप्रमाणवेदवाक्याद्भोग्यादित्रयस्वरूपातिरिक्तं नास्तीत्यर्थः ॥ १६३ ॥

श्वेताश्वतरोपनिषद्यप्येवं श्रूयत इत्याह—

भोक्ता भोग्यं प्रेरितारं च मत्वा

सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतद् ॥

जीवेशानौ सृज्यमानं जगच्च

शुद्धं ब्रह्मेत्याह वेदान्तवाक्यम् ॥ १६४ ॥

भोक्तेति ॥ १६४ ॥

किञ्च—

सुषुप्तिकाले न तु तद्द्वितीयम्

ततोऽस्ति भिन्नं खलु यत्प्रपश्येत् ॥

स्वाभाविके ऽस्मिन्प्रलये न भिन्न-

मात्यन्तिके भिन्नतया कुतस्त्यम् ॥ १६५ ॥

सुषुप्तीति ॥ प्रलयो द्विविधः । स्वाभाविक आत्यन्तिक-

श। तत्र स्वाभाविकः शक्तिशेषः। शक्तिनाश आत्यन्तिकः।

सर्वमात्मेतिसम्यग्धीजन्मनैवाऽखिलेऽत्र मे।

नष्टे नश्यति जीवत्वं जले मक्षिप्तखिल्यवद्।

इत्यात्यन्तिकमलयः। स्वाभाविके सुषुप्तिकाले निद्रामलये ततो न भिन्नं जगद्यत्र नास्ति तत्राऽऽत्यन्तिकमलये कुतो न कस्मादपि हेतोरित्यर्थः॥ १६५॥

नवविधोऽपि संसारो ऽविशिष्टत्वान्मिथ्येत्याह—

माता मानं मेयमेतद्विशिष्टम्

कर्त्ता कार्यं कारणं तद्विशिष्टम्॥

भोक्ता भोज्यं भोजनं तद्विशिष्टम्

मिथ्या सर्वं तद्विशिष्टत्वहेतोः॥ १६६॥

मातेति॥सर्वस्य चैतन्याऽऽभासविशिष्टत्वान्मिथ्येत्यर्थः॥१६६॥

विशिष्टत्वे श्रुतिं प्रमाणयति—

अन्तर्बहिश्चेतिवचःप्रमाणा-

त्सर्वं विशिष्टं गतिरत्र नाऽन्या॥

विशेषणांशं परिहृत्य सर्वं

विशेष्यबुध्या विरजेत्समस्तात्॥ १६७॥

अन्तरिति॥ विशेष्यज्ञानेन विशेषणांशं जडजातं सन्त्यज्य समस्ताज्जडमात्राद्विरजेत्तदानीं त्वंपदलक्ष्यः शुद्ध इत्यर्थः। अन्तःकरणावच्छिन्नं चैतन्यं प्रमाणं तत्रान्तःकरणं स्वावच्छिन्ने चैतन्ये ऽध्यस्तमितिबुद्ध्या विशेषणांशं जडजातं सन्त्यज्य पृथक्कृत्य शुद्धविशेष्यबुद्ध्या ज्ञानेन समस्ताद्विरजेदित्यर्थः। एवं माना-

दिष्वपि बोध्यम् ॥ १६७ ॥

सर्वस्य मिथ्यात्वे स्वयमेव चोद्यमुद्भाव्य समाधत्ते चतुर्भिः श्लोकैः—

सर्वं चैतद्बाधितं चेत्त्वदुक्त्या
मिथ्याभूतं सर्ववेदान्तवाक्यम् ॥
मिथ्याभूताद् ब्रह्मवित्ता न सिद्ध्ये-
दित्याक्षेपे मद्वचस्त्वं शृणुष्व ॥ १६८ ॥

सर्वमिति ॥ १६८ ॥

चोद्यं विकल्प्य दूषयति—

बोधात्पूर्वं तन्मृषा चोत्तरं वा
पूर्वं तच्चेन्नास्ति मिथ्येति बाधः ॥
बोधादूर्ध्वं तन्मृषा त्वं वदेथा
इष्टं तन्नस्ते चिरायुः प्रभूयात् ॥ १६९ ॥

बोधादिति ॥ श्लोकयोः स्पष्टार्थः ॥ ६९ ॥

किञ्च मिथ्याभूताद् सत्यस्य सिद्धेर्दृष्टत्वात्मकृतेऽपि तथास्त्वित्याह—

मिथ्याभूतादन्यतो बिम्बतो धीः
बिम्बस्यैवं दृष्टमस्तीह लोके ॥
मिथ्याभूताद्वेदवाक्यात्स्वरूपे
एवं ब्रह्माप्यस्तु बोध्यं सुशक्यम् ॥ १७० ॥

मिथ्येति ॥ बिम्बतो ऽन्यतो ऽन्यस्मात्प्रतिबिम्बात्स्वतो

मिथ्याभूतादित्यर्थः ॥ १७० ॥

दृष्टान्तरमप्याह—

शुभाऽशुभानां किल सूचकः स्या-
त्स्वप्नस्वरूपेण मृषापि सन्यथा ॥
तथा गुरुः शास्त्रमिहास्तु बोधे
स्वप्नोऽनुभूतिः श्रुतितोऽस्तु न स्मृतिः ॥ १७१ ॥

शुभेति ॥ प्रसङ्गात्स्वप्नस्य केचन स्मृतित्वं वदन्ति तन्निराक्रियते । स्वप्नोऽनुभूतिः श्रुतितः श्रुतिवाक्यात् । "अथवेशान्ता न्पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्तेतिश्रुतेः" । स्वप्नो ऽनुभवो न स्मृतिरित्यर्थः । स्वप्नस्य मिथ्यात्वं भगवान्सूत्रकृदाह । मायामात्रं तु कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वात् । सूत्रस्या ऽयमर्थः । तु पूर्वपक्षनिरासार्थः । स्वप्नसृष्टिर्मायामात्रं शुक्तिरजतवत् । कुतः । कार्त्स्न्येन उचितदेशकालादिसम्पत्त्याऽनभिव्यक्तस्वरूपत्वात् । नहि रथादीनामुचितो देशः स्वप्ने सम्भवति देहान्तरनाडिप्रविष्टमनोऽवच्छिन्नसाक्षिनिष्ठत्वान्नाप्युचितकालो ऽस्ति घटिकामात्रवर्तिनि स्वप्ने बहुसम्वत्सरसाध्यसञ्चरणस्य दर्शनात् । तस्मात्प्रातिभासिक एव स्वप्नः सूचकश्च हि श्रुतेः आचक्षते च तद्विद इतिसूत्रात्स्वप्नस्य शुभाऽशुभसूचकत्वम् ।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्नस्य दर्शने ।

इतिश्रुतेः । शुभाऽशुभसूचकत्वमतः स्वप्नः सत्य इति चेन्न । न हि सूचकत्वमात्रेण स्वप्नस्य सत्यत्वं वक्तुं शक्यते मिथ्याभूतरजतस्य हर्षादिजनकत्वे ऽपि तस्य सत्यत्वं वक्तुं न शक्यते तद्वत् । तस्मात् स्वप्नस्य सूचकत्ववद् गुरुशास्त्रस्य मिथ्यास्वरूपत्वे

सत्यवस्तुबोधे न किञ्चिद्बाधकमितिभावः ॥ १७१ ॥

अज्ञानसंशयविपर्ययचेतनानाम्
तेजो ऽस्ति भासकमयं परमार्थ आत्मा ॥
तद्भासकं किमपि नो कलयामि लोके
तस्मात्स्वयंप्रभमिदं परमार्थवस्तु ॥ १७२ ॥

अज्ञानेति ॥ चेतनशब्देन स्मृतिरूपं प्रमाणरूपं च ज्ञानं संगृह्यत इत्यर्थः । तथा च सर्वप्रत्ययसाक्षी परमार्थ आत्मा स्वयम्प्रकाश इत्यर्थः । स्वप्रकाशत्वं नामाऽपरोक्षत्वे सति चैतन्याविषयत्वम् ॥ १७२ ॥

ननु स्वयम्प्रकाशं यद्यात्मतत्त्वं तर्हि शास्त्रस्य किं प्रयोजनमित्यत आह—

अविद्यानिवृत्त्यर्थमेवेह शास्त्रम्
प्रवृत्तं न तत्स्वप्रकाशप्रबोधे ॥
तिरोधाननाशाद्यथा दीपभानम्
स्वयं जायते तत्र नाऽन्यव्यपेक्षा ॥ १७३ ॥

अविद्येति ॥ १७३ ॥

ननु किन्तच्छास्त्रं येनाऽविद्यानिवृत्त्या अखण्डैकरसब्रह्मबोधो भवतीत्यपेक्षायामाह । पञ्चभिः श्लोकैः—

वेदान्तवाक्यजनितामतिवृत्तिरेनं
ब्रह्मेति बोधयति लक्षणयाऽऽह वृत्त्या ।
अज्ञानतज्जसकलं विनिहत्य चैषा

लीयेत्स्वयं कतकरेणुवदत्र पूर्णे ॥ १७४ ॥

वेदान्तेति ॥ तत्त्वमसीत्युपदेशवाक्यश्रवणानन्तरं ब्रह्माकारवृत्तिरेनं यथोक्ताऽधिकारिणं स्वचिदाभासरूपं जीवमित्यर्थः। वेदान्तवाक्यं च संबन्धत्रयेण बोधयतीत्युक्तमभियुक्तैः।

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः—
पश्चादेशविशेषणेन च तथा पश्चाद्विरोधोद्गमः ।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके
वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभिः ॥
सामानाधिकरण्यमत्र पदयोर्ज्ञेयस्तदीयार्थयोः
सम्बन्धस्तु विशेषणेतरतया ताभ्यां सहाऽस्यात्मनः ।
सम्बन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-
रेतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु ॥

ताभ्यामुभाभ्यां विशेषणविशेष्याभ्यां सहाऽस्यात्मनः शुद्धस्य लक्ष्यलक्षणसम्बन्धः। शबलयोर्लक्षणत्वमात्मनो लक्ष्यतेत्यर्थः। अर्थपदान्यर्थप्रतिपत्तिस्थानानीत्यर्थः। लक्षणयेत्यत्र जहदजहल्लक्षणयेत्यर्थः। इयमेव भागलक्षणेति संज्ञिता । नन्वभिहितान्वयवादे गामानयेत्यादिवाक्येषु लक्षणया वृत्त्या विनाऽपि वाक्यार्थो दृश्यते यथा लोके गामानयेत्यादिपदैः स्मारितानामाकांक्षायोग्यतासन्निधिमतां गवादिपदार्थानामन्वयो वाक्यार्थत्वेन स्वीकृतः। यथा वाऽन्विताभिधानवादे नीलम्महत्सुगन्ध्युत्पलमित्यादौ नीलत्वादिविशिष्टस्योत्पलस्य वाक्यार्थत्वं विनापि लक्षणं स्वीकृतम्। तथा प्रकृतेऽपि विना लक्षणां संसर्गो विशिष्टो वाक्यार्थो ऽस्त्वित्यत आह। लक्षणयाऽपि वृत्त्येति। तथा च सजातीयविजातीयस्वगतभेदशून्यवस्तुमात्ररूपेणाऽखण्डैकरसत्त्वेन वाक्यार्थो विवक्षितोऽतोऽवश्यं जहदजहत्स्वार्थलक्षणा स्वीकार्येत्यर्थः।

संसर्गो वा विशिष्टो वा वाक्यार्थो नाऽत्र सम्मतः।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः।

संसर्गस्य विशिष्टस्य वाक्यार्थत्वे भेदस्फुरणादस्तु तथा वाक्यार्थः। प्रकृते तादृशार्थो न सङ्गच्छते असिपदेनोभयोः पदार्थयोरेकसत्ताकत्वबोधवैयर्थ्यापत्तेरिति भावः। ननु गङ्गायां घोष इतिवदत्र जहल्लक्षणाऽस्त्विति चेन्न। तत्राऽऽधाराधेयभावलक्षणस्य वाक्यार्थस्य सर्वांशे विरोधात्तीरपदानुपस्थितेश्च तदर्थं जहल्लक्षणा युक्ता। अत्र परोक्षापरोक्षचैतन्यैकत्वस्य वाक्यार्थस्यैकभागमात्रे विरोधान्न सर्वांशे विरोधोऽस्तीति जहत्स्वार्थलक्षणा न सङ्गच्छते। तत्र पदान्तराऽनुपस्थित्या तदर्थोऽप्रतीतौ तदर्थं जहल्लक्षणा सम्भवति। प्रकृते तु पदद्वयस्य श्रूयमाणत्वात्तदर्थप्रतीत्यर्थं पदान्तराऽपेक्षा नास्तीति न जहल्लक्षणा सम्भवति। नापि शोणोधावतीतिवदजहल्लक्षणापि सङ्गच्छते। तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयलक्षणया तद्विरोधपरिहारः सम्भवत्यतोजहल्लक्षणा सम्भवति। अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहाराभावादजहल्लक्षणा न सङ्गच्छते। न तत्पदं त्वंपदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं तत्पदार्थं त्वम्पदार्थं वा लक्षयति अतः कथं प्रकारान्तरेण भागलक्षणेति वाच्यम्। एकेन पदेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवात्। पदान्तरेण तदर्थे प्रतीतेर्लक्षणया पुनः प्रतीत्यपेक्षाभावाच्च। इदं लक्षणात्रयं लोकवद्वेदेऽपि दृष्टमस्ति। तथा हि स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीत्यत्र यज्ञायुधविशिष्टदेहस्य स्वर्गगमनाभावात्स्वार्थदेहत्यागेन यजमा-

नात्मस्वरूपं यज्ञायुधंशब्देन लक्ष्यते । तथा वैश्वानरमुपास्वेति वाक्ये वैश्वानरशब्देन जाठराग्निवाचिना स्वार्थं गृहीत्वैव परमात्मोपास्यत्वेन लक्ष्यते । भागलक्षणा तु तत्वमसिवाक्ये । अत्र हि तत्त्वंपदयोरस्वार्थशबलगतपारोक्ष्यसद्वयत्त्वभागद्वयवर्जनेन प्रत्यक्त्वाद्वयत्वभागद्वयोपादानेनाऽखण्डपरमात्मप्रतीतिजनने जहदजहल्लक्षणैव समर्था । अत्र केचित्पण्डितंमन्याश्चोदयन्ति । तथाहि । तत्वमस्यादिवाक्ये त्वंपदस्यान्तःकरणविशिष्टे शक्तिस्तथा च विशिष्टस्य त्वंपदादुपस्थितिः । एवं तत्पदस्याऽपि मायाविशिष्टे शक्त्या मायाविशिष्टस्यैवोपस्थितिः । विशिष्टयोस्तु तत्वम्पदार्थयोरभेदान्वये अयोग्यत्वाद्विशेष्यांशमादायैवान्वयो वाच्यः । एवं सत्यभेदान्वयोपपत्त्यर्थं शुद्धे विशेषमात्रे न लक्षणा अतएवाऽनित्यो घट इत्यादौ शक्त्या उपस्थिते घटत्वविशिष्टे विशेषांशमादायैवान्वयोपपत्तेर्निर्विशेष्यमात्रे लक्षणेति । तन्न । शब्दे ह्ययं नियमो यः पदार्थो येन रूपेण पदादुपस्थितस्तेनैव रूपेणाऽपरपदार्थे ऽन्वेति । यथा पर्वतो वह्निमान् अनित्यो घट इत्यादौ वह्नित्वघटत्वादिना रूपेण वह्निघटादेरुपस्थितत्वात्तेनैव रूपेण पर्वतादावन्वयो न तु तद्रूपं परित्यज्येति । तथा च तत्वमादिपदेन शक्त्या निर्वाहः । शक्त्या तत्तद्धर्मपुरस्कारेणैवोपस्थितेस्तेनरूपेणाऽभेदान्वयो बाधित एवेति शुद्धस्य विशेष्योपस्थित्यर्थं तत्वमादिपदे लक्षणाऽऽवश्यकी तेन लक्षणयोपस्थितयोः शुद्धयोरभेदान्वयोपपत्तिरिति सिद्धम् । ननु तथाप्यखण्डाकारवृत्त्या सद्द्वयत्वमतीतेरभेदान्वयः सिद्ध इति चेत् सदृष्टान्तमाह । यथा कतकरेणुर्निर्मलीवीजं जलगतकालुष्यं विनाश्य स्वयमपि तत्रैव लीयते तद्वाक्योत्थवृत्तिरपि पूर्णे ऽत्राखण्डनीत्या ऽपरोक्षस्वभावे प्रत्यग्ब्रह्मणि लीयेदित्यर्थः ॥ १७४ ॥

तदेव स्पष्टयति—

वाक्योत्थवृत्त्या परमात्मवस्तु
संव्याप्यते तद्गतमौढ्यहान्यै ॥
वृत्तेः प्रबाधात्खलु तद्गतं य-
च्चैतन्यमात्रं परिशिष्यते तत ॥ १७५ ॥

वाक्योत्थवृत्त्येति ॥ तद्गतमौढ्यहान्यै पुरुषगतं यन्मौढ्यं तन्नाशाय परमात्मवस्तु यदादिवद्व्याप्यते । ततश्चाऽज्ञानहान्या तदन्तर्गता वृत्तिरपि बाधिता भवति । तदाश्रयीभूतवृत्तिबाधात्तत्रस्थं चैतन्यमात्रमवशिष्यते मुखाऽऽभासाऽऽश्रयदर्पणनाशे मुखमिवेत्यर्थः ॥ १७५ ॥

अत्रवृत्तिव्याप्यमात्रमपेक्षितं न तु फलव्याप्यत्वमपि प्रयोजनाभावादित्याह—

प्रयोजनं नास्ति फलस्य किञ्चि-
ज्ज्ञेयं परं ब्रह्म यतः स्वयंप्रभु ॥
जडे फलव्याप्तिरपेक्षिता ऽस्ति
घटादिके नात्र परप्रकाश्ये ॥ १७६ ॥

प्रयोजनमिति । परप्रकाशने परब्रह्मप्रकाशन इत्यर्थः १७६

लक्षणया ब्रह्मबोधे ऽपि ज्ञानकर्मत्वं न सम्भवतीत्याह—

प्रत्यग्भावात्तु वाह्यवलक्षणाया
मार्गेणाऽपि ज्ञानकर्मत्वमस्य ॥
नैवं वाच्यं कर्म यद्वत्पराक् स्या-
त्तत्वप्रसङ्ग् नैव दृष्टं कदापि ॥ १७७ ॥

प्रत्यागिति ॥ अस्य बुद्धस्यात्मनस्तीरादिवल्लक्षणामार्गेणा ऽपि ज्ञानकर्मत्वं नैव वाच्यं।कुतः।प्रत्यग्भावात्प्रत्यक्त्वात् । बधसायत्पराक्तत्प्रत्यक् न दृष्टमित्यर्थः । यत्पराक् तस्यैव ज्ञानकर्मत्वं सम्भवति न प्रतीच इति भावः । तदुक्तम् ।

आत्मानं न तु कर्मतामुपनयन् शब्दो वदेल्लक्षणा-
मार्गेणाऽपि यतः पराग्विषयवत्रास्येष्यते कर्मता ॥
प्रत्यक्ता हि विरुध्यते यदि भवेदस्याऽऽत्मनः कर्मता
यद्यत्कर्म न तस्य तस्य भवति प्रत्यक्स्वभावो यतः ॥ १ ॥
वागादेः खलु बाह्यकृत्स्नविषयो नाऽऽत्मा यतो नात्मनि
व्यापारं करणस्य कस्य चिदपि प्रेक्ष्यामहे न्यायतः ॥
यत्किञ्चित्करणं जगत्यनुगतं तत्प्रत्यगात्मेक्षितम्
बाह्यं वस्तु निवर्त्तते ऽनुभवनं तत्र प्रमाणं मतम् ॥ २ ॥
प्रत्यग्रूपमतो न शब्दविषयो बुद्धेरवेद्यं यतो-
बुद्धि र्यत्र हि विद्यते स विषयः शब्दस्य नाऽऽत्मन्यसौ ॥
तत्राऽऽत्मानमसौ नगोचरयितुं शब्दः समो मुख्यया
वृत्त्या वेतरया ऽपि तेन न तयाऽप्यस्याऽऽत्मनः कर्मता ॥

इति ॥ १७७ ॥

फलमाह—

आनन्दांशे यत्समाच्छादनं त-
न्नष्टं ज्ञानात्स्वप्रभानन्द आत्मा ॥
नित्यः शुद्धो बुद्धमुक्तस्वभावः-
पूर्णोऽनन्तः सत्य आविर्भवेत्सः ॥ १७८ ॥

आनन्देति ॥ चिदाभासस्य जीवस्य यदानन्दांशे विज्ञानम् आनन्दं ब्रह्मेतिश्रुतेः । आनन्दरूपब्रह्मांशे यत्समाच्छादन-

मावरणं तज्ज्ञानान्महावाक्याखण्डार्थाऽनुभवाज्ज्ञानान्नष्टं ज्ञानाऽज्ञानयोर्विरोधान्नष्टमित्यर्थः । ततः किमित्याह । स्वप्रभानन्देत्यादि । सोऽहमित्यपरोक्षतयाऽऽविर्भवेदित्यर्थः । तत्रा ऽहं ब्रह्मास्मीत्यनुभववाक्यार्थे साम्प्रदायिका आहुः ।

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
वेदान्तानां प्रवृत्तिः स्याद् द्विधेत्याचार्यभाषितम् ॥
अहमर्थपरित्यागादहं ब्रह्मेति धीः कुतः ।
नैवमंशस्य हि त्यागो भागलक्षणयोदितः ॥
अन्तःकरणसन्त्यागादवशिष्टे चिदात्मनि ।
अहंब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते ॥
स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत् ।
फलव्याप्यत्वमेवाऽस्य शास्त्रकृद्भिर्निवारितम् ॥
बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राऽज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयं स्फुरणरूपत्वान्नाऽभास उपयुज्यते ॥
चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने यथा ।
न दीपदर्शने किन्तु चक्षुरेकमपेक्षते ॥
स्थितोप्यसौ चिदाभासो ब्रह्मण्येकीभवेत्परम् ।
न तु ब्रह्मण्यतिशयं फलं कुर्याद् घटादिवत् ॥
अप्रमेयमनादिश्चेत्यत्र श्रुत्येदमीरितम् ।
मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुतेति ॥

तथा दक्षिणामूर्त्तिवार्त्तिके ।

त्वमिन्द्रोऽसीतिवद्वाक्यं न खलु स्तुतिवत्परम् ।
न सादृश्यपरं वाक्यमग्निर्माणवकादिवत् ॥

न कार्यकारणत्वस्य साधनं मृद्धटादिवत् ।
न जातिव्यक्तिगमकं गोः खण्ड इतिवद्वचः ॥
गुणगुण्यात्मकं वाक्यं नैतन्नीलोत्पलादिवत् ।
नोपासनापरं वाक्यं प्रतिमास्वीशबुद्धिवत् ॥
न चौपचारिकं वाक्यं राजवद्राजपूरुषे ।
जीवात्मना प्रविष्टो ऽसावीश्वरः श्रूयते यत इति ॥१७८॥

केषाञ्चिद्वादिनामज्ञानामुपहासं निराकरोति—

सन्चिद्रूपं ब्रह्म चाऽस्मापि संवि-
द्वाक्यादन्या संविदित्थं न वाच्यम् ॥
वाक्योद्भूता वृत्तिरज्ञानमात्रम्
हन्यात्पश्चाच्छिष्यते संविदेका ॥ १७९ ॥

संविदिति ॥ १७९ ॥

अथ सर्वविचारफलं निगमयति—

तस्मादखण्डैकरसं विशुद्धम्
ब्रह्माहमस्मीति ममाऽनुभूतिः ॥
नह्यत्र संशीतिविपर्ययौ स्तो
वेदान्तवाक्यैर्गुरुभिः प्रबोधात् ॥ १८० ॥

तस्मादिति ॥ शास्त्रगुर्वनुभवैरखण्डब्रह्मसिद्धिरितिभावः ॥ १८० ॥

ननु जीवेशयोर्भेदोऽनादित्वेन पूर्वाचार्यैरङ्गीकृतस्तद्विरुद्धमखण्डत्वं कथमुच्यत इत्यत आह—

अनादिषट्कस्य निरूपणं बुधै-

बोधोदयात्प्रागुररीकृतं त्विह ॥
वाक्यार्थबोधे न हि सादिनाऽधुना
प्रबाधितं तत्सकलं निरूपणम् ॥ १८१ ॥

अनादीति ॥
जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या च तच्चितोर्योगः षडस्माकमनादय इति ॥
बुधैः सांप्रदायिकैरनादित्वं स्वीकृतं तद्बोधोदयात्प्रागेव व्युत्पत्त्यर्थं तत्सकलं निरूपणं सादिना महावाक्योत्पन्नेन बोधेन प्रकर्षेण बाधितं नाऽतस्तदुक्तेन सह विरोध इत्यर्थः ॥ १८१ ॥

अथ—
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावरे ॥
"तमेव विदित्वा ऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाये"त्यादिश्रुतिभिर्ब्रह्मज्ञानेन मोक्षं दर्शयंस्ताभिस्तदन्यत्र ज्ञानेन न संसारनिवृत्तिरित्याह—

ब्रह्मात्मविज्ञानमृते नराणाम्
ज्ञानान्तरे फल्गुतरे प्रयासः ॥
नैवोचितो नैव हि गर्भवास-
परम्परा शाम्यति नैव तेषाम् ॥ १८२ ॥

ब्रह्मेति ॥ फल्गुतरे निःसारतर इत्यर्थः । अत्राऽर्थे श्रुतिर्विद्वदनुभवमनुवदति । "इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः। य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवाऽपियन्ति" । अयमर्थः श्रुतेः । इहैव देह एवाऽज्ञाननिद्रारहिताः सं-

न्तो वयं अथ कथञ्चिद् ब्रह्मतत्वमात्मत्वेन विद्यो जानीमः, न चे-दिदितवन्तस्तदा न वेदिः स्यां, वेदनं वेदः सोऽस्यास्तीति वेदी वैव वेदिर्न वेदिः अवेदिः स्यां, तदा महती अनन्तपरिमाणज-न्ममरणादिलक्षणा विनष्टिर्विनाशः स्यात् । उक्तमेव मपञ्चयति य इति । एवं येऽप्यन्ये तद् ब्रह्म विदुस्तेऽप्यमृता मुक्ता भवन्त्यथ पुनर्ये नैवंविदुस्ते इतरे जन्ममरणादिलक्षणमपि यान्ति प्रपद्यन्त इत्यर्थः ॥ १८२ ॥

अत एव—

अध्यात्मविद्या परमा हि विद्या
परंपरासाधनमन्यविद्या ॥
विद्यान्तराणामथ मोक्षवादः
स ह्यर्थवादः खलु पर्णतादिवत ॥ १८३ ॥

अध्यात्मविद्येति ॥ "अथ परा यया तदक्षरमधिगम्य-त इति" मुण्डकश्रुतेः । "अध्यात्मविद्या विद्यानामिति" गीतो-क्तेश्च । हि निश्चयेन परमा उत्कृष्टा अध्यात्मविद्या । ननु तर्ह्य-न्यविद्यानां व्यर्थता स्यादित्यत आह । परम्परेति । अन्यविद्याः परम्परया साधनीभूता अङ्गभूतास्तासां यो मोक्षवादः स हि निश्चयेनाऽर्थवादः अङ्गेषु फलश्रुतिरर्थवाद इतिन्यायात् । तत्र दृष्टान्तमाह । यथा पर्णताया जुहूद्वारा अङ्गीभूताया अपापश्लो-कफलश्रुतिरर्थवादस्तद्वदित्यर्थः । विद्यास्तावदष्टादश । तथाहि । ऋग्वेदो यजुर्वेदः सामवेदो ऽथर्ववेद इतिचत्वारो वेदाः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । पुरा-णन्यायमीमांसाधर्मशास्त्राणि चेति चत्वारि उपाङ्गानि । तत्रो-पपुराणानामपि पुराणेष्वन्तर्भावः । पुराणं नाम—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

वैशेषिकशास्त्रस्य न्याये, वेदान्तशास्त्रस्य चतुरध्यायात्मकस्य मीमांसायां, महाभारतरामायणसांख्यपातञ्जलपाशुपतवैष्णवादीनां धर्मशास्त्रेष्वेवं मिलित्वा चतुर्दश विद्याः। तथा चोक्तम्।

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति ॥

एता एव "आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकमिति"। चतुरुपवेदमिश्रिताः अष्टादश विद्या इति । तत्रोपाङ्गेषु न्यायादिषु मोक्षस्तत्तच्छास्त्रज्ञानेन वदन्ति । तथाहि । तत्रन्यायोपाङ्गान्तर्भूतवैशेषिकशास्त्रप्रणेता काणादो देहेन्द्रियव्यतिरिक्तम् विभुमात्मानं नवविशेषगुणाश्रयं जल्पन्नाह । द्रव्यगुणकर्मसामान्यविशेषसमवायानां षट्पदार्थानां साधर्म्यवैधर्म्याभ्यां यत्तत्त्वज्ञानं तत्पूर्वकादात्मसाक्षात्काराद् बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्कारेतिनवविशेषगुणानां प्रागभावाऽसहवृत्तिप्रध्वंस एवाऽऽत्मनः कैवल्यमिति । तथैव उपाङ्गपठितन्यायशास्त्रविदः प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासस्थलजातिनिग्रहस्थानानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिरात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाख्यद्वादशविधप्रमेयनिष्कर्षेणात्मद्वयसाक्षात्काराच्छ्रवणमननिदिध्यासनपूर्वकात् सवासनमिथ्याज्ञाननिवृत्तौ तत्कार्याणां रागद्वेषमोहानां निवृत्तिस्ततस्तत्कार्ययोः प्रवृत्तिपूर्वकयोर्धर्माऽधर्मयोस्ततः पूर्वार्जितकर्मणां कायव्यूहपूर्वकभोगेन क्षयात् शरीरान्तरानारम्भः ततो बाधनालक्षणस्य षडिन्द्रियषड्विषयषड्बुद्धिसुखदुःखशरीररूपैकविंशतिभेदभिन्नस्य दुःख-

स्याऽऽत्यन्तिकाविमोक्षोऽपवर्गः इति कल्पयन्ति । अपरे तु ऐहिकमात्विकन्यायेनाऽऽत्मज्ञानमन्तरेणाऽपि निषिद्धकाम्ययोरननुष्ठानान्नित्याऽनुष्ठानाच्च नाऽऽगामिकर्मोत्पादो विद्यमानस्य चोपभोगेन क्षयात् सकलकर्मोच्छेदेन लक्षणमपवर्गमाहुः । मीमांसकैकदेशिन उपाङ्गान्तर्गतमताः प्राभाकराः वैदिककर्मानुष्ठानाद्विहितात्मज्ञानपूर्वकाद्देहेन्द्रियादिसम्बन्धस्य धर्माऽधर्मपरिक्षयनिमित्तमात्यन्तिकोच्छेदमपवर्गमाहुः । भाट्टास्तु ज्ञानकर्मसमुच्चयादेवात्मनो जडबोध्यात्मकस्य नित्यज्ञानं नित्यसुखं चोदेति ततश्च विषयविशेषानपेक्षया नित्यज्ञानेन नित्यसुखाऽभिव्यक्तिर्मुक्तिरित्याहुः । सांख्यास्तु उपाङ्गधर्मशास्त्रान्तर्गताः प्रकृतिपुरुषविवेकादनाद्यविवेकनिवृत्तौ पुरुषं प्रति चरिताधिकारायाः प्रकृतेर्न पुनस्तद्भोगार्थी प्रवृत्तिरिति त्रिविधदुःखस्याऽऽत्यन्तनिरोध एव स्वभावतः केवलस्याऽपि पुरुषस्य कैवल्यमित्याहुः । पातञ्जलास्तु प्रकृतिपुरुषविवेकेनाऽभ्यासवैराग्यपरिपाकाद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसम्प्रज्ञातसमाधिपूर्वकात् परमेश्वरप्रसादजात् प्रमाणविपर्ययविकल्पस्मृतिनिद्राख्यपञ्चविधवृत्तीनां निरोधादेव धर्ममेघप्रभ्दितादसंप्रज्ञातसमाधेः कैवल्यमिति कल्पयन्ति । त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदाऽभेदमभ्युपेत्य ज्ञानकर्मसमुच्चयादेव कारणात्मकब्रह्मणि कार्यात्मकजीवस्य कर्मवासनासहितभेदांशनिवृत्तिर्मोक्ष इति वदन्ति । परमेश्वरप्राप्तिरित्यन्ये । सतरङ्गभेदेन समुद्रैर्विवक्षवत्सविकारनिर्विकाररूपेणाऽवस्थाद्वयं ब्रह्मणः परिकल्प्य ज्ञानकर्मसमुच्चयाभ्यासादेव सविकाराऽवस्थापरित्यागेन निर्विकाराऽवस्थाप्राप्तिरेव मोक्ष इत्यपरे । उपाङ्गधर्मशास्त्रान्तर्गतमताः पाशुपताः पशुपतिधर्माचरणात्पशुपतिगमनमेव इत्याहुः । एवं उपाङ्गधर्मशास्त्रान्तर्गतमता

वैष्णवाः वैष्णवधर्माचरणाद्विष्णुलोकगमनमेव मोक्ष इति वदन्ति। पञ्चाग्निविद्याद्युपासनैरर्चिरादिमार्गेण हिरण्यगर्भप्राप्तिर्मोक्ष इति हिरण्यगर्भाः। एवमपरे ऽपि स्वकपोलपरिकल्पितश्रुतियुक्तिभिरिममेव मोक्षं बहुधा जल्पन्ति। औपनिषदास्तु निरतिशयाद्वयानन्दबोध आत्मैवाऽनाद्यविद्यानिवृत्त्युपलक्षितो मोक्ष इत्याचक्षते। अविद्यायाश्च सर्वदुःखोपादानत्वान्निवृत्त्या ऽऽत्यन्तिकदुःखनिवृत्तिरप्युपपद्यत इति। तस्मादुपाङ्गपठितमोक्षकथनमर्थवादः श्रौतमार्गोदुपेक्ष्य इति सिद्धम्॥ १८३॥

अष्टादशविद्याबहिर्भूतकाव्यादिषु निरूपिताष्टरससेवनादनर्थमाप्तिरेवेत्याह—

अष्टौ रसान्यान्मधुरादिषड्रसान्
पीत्वा पिपासा परिवर्द्धते भृशम्॥
एकस्य शांत्याख्यरसस्य पानतो-
न नःपिपासालवलेशविभ्रमः॥ १८४॥

अष्टाविति॥
शृंगारवीरकरुणाद्भुतहास्यभयानकाः।
बीभत्सरौद्रौ च रसाः॥
एतेषां तत्तत्कविमुखाच्छ्रवणं स्वयंग्रन्थावलोकनं वा पानं यथा।

अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः
कलंकेनाऽस्पृष्टो न खलु परिभूतो दिनकृता॥
कुहूभिर्नो लुप्तो न च युवतिवक्त्रेण विजितः
कलानाथः कोऽयं कनकलतिकायामुदयते॥ १॥
एवमादिरसपानतः भृशं पिपासा वर्द्धत इति रसिकाऽनुभव-

सिद्धम्। तथा वैषयिकाणां मधुरादिरसपानतः पिपासा वर्द्धेत एव। एकस्य शांत्याख्यरसस्य निर्विकल्पकात्मसाक्षात्काररूपस्य पानतः सेवनान्नोऽस्माकं पिपासायाः लवस्तस्याऽपि लेशस्ततो यो विभ्रमो मोहः स नास्तीत्यर्थः॥ १८४॥

इदानीं श्रुत्युक्तब्राह्मणकृपणौ दर्शयति—

एतन्मनुष्येषु जनुः सुदुर्लभम्
तत्राऽपि विप्रेषु महत्सुदुर्लभम्॥
ज्ञात्वा ऽत्र शुद्धं परमं तनुं त्यजेत्
स ब्राह्मणो ऽन्यः कृपणो वतात्महा॥ १८५॥

एतदिति॥ "यो ह वा एतदक्षरं गार्ग्यविदित्वा ऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मण इतिश्रुतेः"। कृपणब्राह्मणौ ज्ञेयौ॥

असूर्या नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याऽभिगच्छन्ति ये के चाऽऽत्महनो जनाः॥

श्रुत्यर्थस्तु। ये के चनानात्मज्ञास्ते अन्धेनाऽदर्शनात्मकेन तमसा अज्ञानेन आवृताः लोकाः कर्मफलानि तानि यथाकर्म यथाश्रुतं कर्मफलानि लोकान्पश्यन्ति ते आत्महन आत्मानं घ्नन्तीत्यात्महनः कथं नित्यमात्मानं हिंसंतीत्युच्यते। अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणादविद्वांसो जना आत्महन उच्यन्त इत्यर्थः॥ १८५॥

ज्ञानं विना न कुत्रापि मोक्ष इत्याह—

काश्यां मृत्योर्मोक्ष इत्याहुरेके
तत्रापीशस्तारकस्योपदेशात्॥

सर्वाञ्जीवांस्तारयेद्विश्वनाथ-
स्तस्माज्ज्ञानं मोक्षदं नैव मृत्युः ॥ १८६ ॥

काश्यामिति ॥ तथा च स्मर्यते ॥
प्राणांस्त्यजंतो मणिकर्णिकायां महाचक्रं तारकमुच्चरन्तः ॥
श्रुत्वा च वेदान्तमुपास्य वाच्यं पश्यंति मामेव हि विश्वनाथमिति ॥ १८६ ॥

यस्य परिच्छेदविहीनात्मज्ञानं नास्ति तेन तीर्थगमनं कर्त्तव्यमित्याह—

काश्यां मूढो द्वारकायां प्रभासे
नाऽहं तत्रास्मीति यस्याऽस्ति बुद्धिः ॥
सोऽयं देही गच्छताद्यत्र तस्मि-
न्नाहं गन्ता व्यापकत्वादनन्तः ॥ १८७ ॥

काश्यामिति ॥ देही देहात्माभिमानवानित्यर्थः। तदुक्तं।
यावद्देहात्मविज्ञानं बाध्यते न प्रमाणतः।
प्रामाण्यं कर्मकांडस्य तावदेवोपपद्यते ॥
इति परिच्छिन्नात्मज्ञानवतां चित्तशुद्ध्यर्थं तीर्थादिगमनं कर्मानुष्ठानं च युक्तमितिभावः। शेषं स्पष्टम् ॥ १८७ ॥

उपासनरूपकर्मभि र्न मोक्षो बाधकमाहोरित्याह—

उपासनानां बहु तारतम्य-
माम्नायते तत्र च तत्र वेदे ॥
ताभिर्हि मोक्षः परिकल्प्यते च
तत्तारतम्यं त्वमृतेति कल्प्यम् ॥ १८८ ॥

उपासनानामिति ॥ विराड्हिरण्यगर्भपरमेश्वरोपासनादिषु तारतम्यदर्शनादमृते मोक्षेऽपि तारतम्यं कल्प्यं तच्चानिष्टं मोक्षस्यैकरूपत्वादित्यर्थः । "तं यथा यथोपासते तथैव भवतीतिश्रुतेः" । "देवो भूत्वादेवानप्येति श्रुते"श्च । ईदृशबाधकसत्वान्नाग्निर्न मोक्ष इत्यभिप्रायः ॥ १८८ ॥

तदेव दर्शयति—

अहंग्रहोपासनया नराणाम्

सायुज्यसालोक्यसमीपतादि ॥

प्रायः प्रतीकस्य फलं न सम्यग्

विनाशि सर्वत्र हि कामचारः ॥ १८९ ॥

अहमिति॥द्विविधमुपासनं अहंग्रहोसनं प्रतीकोपासनं च। तत्र विभज्योभयोः फलं दर्शयति । अहंग्रहोपासनेन उपास्यदेवतातादात्म्यरूपसाक्षात्कारेण सायुज्यम् । "साम्नः सायुज्यं सलोकताञ्जयतीतिश्रुतेः"। ततोऽल्पध्यानवशात्सामीप्यं ततः सलोकतां आदिशब्देन सार्ष्टित्वं स्वभोगार्थं सृष्टिकर्तृत्वं तच्च जगद्व्यापारवर्जं जगद्व्यापारवर्जमकरणादसंनिहितत्वाच्चेति सूत्रात् । यद्विदुष ऐश्वर्यं तन्निरङ्कुशं सातिशयं वेति सन्देहे जगदुत्पत्यादिव्यापारवर्जं सातिशयमेव । यद्यणिमाद्यैश्वर्यं विदुषः जगद्व्यापारस्तु परमेश्वरस्यैव सृष्टिवाक्येषु सर्वत्र तस्यैव प्रकरणाद्विदुषश्च तत्रासन्निहितत्वात् नित्यसिद्धं हि परमेश्वरस्य निरङ्कुशमैश्वर्यं, कथं वा विदुष ईश्वरप्रसादायतमागन्तुकमैश्वर्यं निरङ्कुशमिति वक्तुं न शक्यं, तस्मात्सातिशयमैश्वर्यंविदुष इति सूत्रार्थः । अस्योपासकस्य श्रुताविमं मानवमावर्त्तं नावर्ततइति इममिति विशेषणान्मन्वन्तरे आवृत्तिरिति वदन्ति । तदुक्तम् ।

यदि वा समुच्चयवशात्पुरुषः कमलासनं व्रजति कामुकधीः।
पुनरेव मानवमिमं तु विना परिवर्त्तमात्रजति मूढमतिरिति॥

एवं सति तत्त्वमस्यादिजन्यसाक्षात्कारेणाऽज्ञाननिवृत्तौ न विगानम्। अतोऽत्रैव यतितव्यमिति युक्तं प्रतिभासते। प्रायो बाहुल्येन प्रतीकस्य प्रतीकोपासनस्य विनाशि फलं सर्वत्र कामचाररूपं न सम्यक् यथा अतत्क्रतुना प्रतीकोपासकानां नामब्रह्मेत्याद्युपासकानां शब्दशास्त्रादिलक्षणे नामविषये स्वातन्त्र्यमन्येषामपि तथा कामचार एव फलतुच्छत्वान्न युक्तमिति भावः॥ १८९॥

एवं श्रीमच्छङ्करनिर्मिततन्त्रेषु प्रतीकोपासनमेवोपलक्ष्यते न त्वहंग्रहोपासनमित्याह—

शालिग्रामे धातुदेहेऽथ यन्त्रे
पूजा कार्या मूलमन्त्रैः प्रतीकैः॥
तन्त्रेष्वेवं शम्भुना प्रोक्तमेत
न्नान्यत्तत्राऽहंग्रहोपासनाख्यम्॥ १९०॥

शालिग्राम इति॥ १९०॥

उपासनाभिः क्रममुक्तिरुक्ता तत्रापि ज्ञानेनैव मुक्तिर्न भावनामात्रेणेत्याह—

उपासनाभिः क्रममुक्तिरुक्ता
तत्रा ऽपि मुक्तिः परमात्मबुद्धितः॥
अज्ञानहानं न विनास्ति मुक्ति-
रज्ञाननाशो न हि भावनात्वतः॥ १९१॥

उपासनाभिरिति॥ अतएवोक्तं शारीरवार्तिके॥

अथ वा स तत्र परमात्ममतिः परिमुच्यते सकलबन्धनतः।
क्रमयोगमुक्तिरुदिता श्रुतिषु प्रतिशाखमेवमुपपन्नतरेति ॥
अत एव श्रीबादरायणनोक्तम् । अनावृत्तिः शब्दादिति । अस्मात्सर्वत्र ज्ञानादेव मोक्ष इति सिद्धम् । अन्यथा "नान्यः पन्था विद्यतेऽयनायेत्यादि" श्रुतिविरोध इति ज्ञेयम्।श्रुतौ निर्गुणसगुणविषययोः फलमुक्तम् ।
ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याऽभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामइति।
श्रुत्यर्थस्तु देवं स्वप्रकाशमीश्वरं ज्ञात्वाऽऽत्मत्वेन साक्षात्कृत्य सर्वपाशानामज्ञानरागादीनां क्लेशानामपहानिः क्षयोऽस्मिन्नजन्मनि भवति एवं क्षीणैः क्लेशैस्तत्कार्यजन्ममरणयोः क्षयो भवति। निर्गुणविद्याफलमुक्त्वा सगुणविद्याफलमाह। तस्येति। तस्येश्वरस्याऽभिमुख्येन ध्यानादुक्तहानिद्वयापेक्षया तृतीयमणिमाद्यैश्वर्यं देहभेदे देहविशेषे सिद्धदेहे प्राप्तं भुक्त्वा निर्गुणविद्योदये केवले ऽद्वितीये आप्तकामो निरतिशयानन्दात्मनैवाऽवतिष्ठत इति क्रममुक्तिवाक्यार्थः ॥ १९१ ॥
ज्ञानोत्तरं न वासनाभिर्बन्धस्तासां बाधितत्वादित्याह-

सवासनान्तःकरणस्य साक्षी
न मे ऽधुना वासनयाऽस्ति बन्धः ॥
यदा यदोदेति तदा मृषात्वा-
द्विकारभावात् स्वयमस्तमेति ॥ १९२ ॥

सवासनेति ॥
वासनोदयसमय एव मृषात्वनिश्चयाद्विकारभावादन्तःकरणविकारत्वादेति विचारस्फुरणादुत्पन्नाऽपि सा स्वयमस्तं नाशं-

मेति । इयमेव जीवन्मुक्तिरितिभावः ॥ १९२ ॥

इदानीमुपासकात्तत्त्वज्ञानिनो विशेषमाह—

प्राणोत्क्रान्तिर्नाऽऽधुना मे भवित्री
प्राणाः पूर्णे लीयमाना भवेयुः ॥
रज्जौ सर्पन्यायतः संप्रबोधात्
नैवोत्पन्ना नैव यास्यन्ति नाशम् ॥ १९३ ॥

प्राणोत्क्रान्तिरिति । प्राणशब्दोपलक्षितं गमनाऽगमनहेतु-भूतं लिङ्गं पूर्णे ब्रह्मणि लीयमानं स्यात् । कथं लय इत्यपेक्षायामाह । यथा रज्जौ सर्प उत्पन्न एव नाऽस्ति, "नाऽसतो विद्यते भाव" इति स्मरणात्तस्य नाशः कुत एवं प्राणा इत्यर्थः । सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदेत्यादिना सर्वथा जगन्नाऽस्त्येवेत्युक्तत्वात् । "अथा ऽकामयमानो योऽ कामोनिष्काम आप्तकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येतीति" श्रुतेः । श्रुत्यर्थस्तु । बाह्यविषयकामताशून्यत्वं अकामत्वं मानसविषयकामनाशून्यत्वं निष्कामत्वं प्राप्तस्वरूपानन्दतृप्तत्वमाप्तकामत्वं तत्र सर्वत्र हेतुः आत्मकाम इत्यर्थः ॥ विद्वद्देहादेव प्राणोत्क्रान्तिनिषेधोऽयमिति सिद्धान्तः। उपासकस्य तु "तयोर्ध्वमायन्नमृतत्वमेति" श्रुतेर्मूर्धन्यनाडिद्वारा उत्क्रान्तिरस्ति नैवं तत्त्वज्ञानिन इतिविशेषः ॥ १९३ ॥

यदा नाऽस्ति बोधो न बाधो जडानाम्
तदा वासनाभीतिरन्त्यप्रयाणे ॥
यदोपासकः कश्चिदन्यो नरो वा
भयं तस्य ताभिर्जनुः कारणत्वात् ॥ १९४ ॥

यदेति ॥
यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तन्तमेवैति कौन्तेय सदा तद्भावभावितः ॥
इतिस्मरणादित्यर्थः ॥ १९४ ॥

न वासनानां वशवर्त्तिता ऽस्य
प्राणास्तु सर्वे वशवर्त्तिनो ऽस्य ॥
प्रारब्धभोगाय हि वासना या
सा जन्महेतुर्न फलप्रदा च ॥ १९५ ॥

नेति॥दशेन्द्रियाणि मरुतः पञ्च च प्राणसञ्ज्ञिता इति वार्त्तिकोक्तेः प्राणा इन्द्रियाणि वशवर्त्तीनीत्यर्थः ॥ १९५
ज्ञानिनः कोपि विधिर्नाऽस्तीत्याह—

ज्ञाने समाप्तं सकलं हि कर्म
तस्मिन्पुनः कोऽपि विधिर्न चाऽस्य ॥
समाधिमन्तःकरणस्य धर्मम्
करिष्यते चेत्प्रकरोतु मा वा ॥ १९६ ॥

ज्ञानइति ॥
सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते ।
इतिस्मरणात् न तत्वज्ञानिनः कोपि विधिरित्यर्थः । समाधिमुक्तलक्षणं जीवन्मुक्तिसुखार्थं करिष्यते चेत्करोतु न करोतु वा ऐछिकत्वात्तस्येत्यर्थः ॥ १९६ ॥
यस्य ज्ञेयकार्यसमाप्तिर्जाता स एव तत्वविन्मुख्योऽन्यस्तत्त्वज्ञाभास इत्याह—

यस्य ज्ञेयं कार्यजातं समाप्तम्
तत्त्वज्ञानात्तत्त्वविन्मुख्य एषः ॥
ज्ञेयं कार्यं शिष्यते यस्य पुंस-
स्तत्त्वज्ञस्याऽऽभासतां याति दुःखी ॥ १९७ ॥

यस्येति ॥ १९७ ॥

ननु—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।

स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ।

इतिस्मरणात् ब्रह्मज्ञस्य कर्माननुष्ठानदर्शनात्कर्मोच्छेदः स्यादित्यत आह—

स्वतो न तेषां किमपीह कार्यम्
अथापि लोकस्य हि संग्रहार्थम् ॥
कुर्वन्ति सन्तः सकलं स्वधर्मम्
श्रीकृष्णवच्चे कृपया जनानाम् ॥ १९८ ॥

स्वतइति ॥ स्वधर्ममित्यनेन प्रवृत्तश्चेदग्निहोत्रादि लोकसङ्ग्रहार्थम् निवृत्तश्चेद्यथोक्तकाले असति बाधके यथाकाले भिक्षाटनस्नानादीति ज्ञेयम् । श्रीकृष्णवच्चे कृपया जनार्थं स्वधर्मं कुर्वन्तीत्यर्थः ॥

नाऽनवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ।

इत्यादिश्लोके श्रीकृष्णस्य कर्मानुष्ठानदर्शनाच्छ्रीकृष्णवदित्युक्तम् ॥ १९८ ॥

एवं धर्माऽनुष्ठाने लोका एनं तत्वज्ञं संसार्ययमितिवदेयुरिति चेत् वदन्तु नाम परमार्थतो न कापि हानिरिति स्वाऽनुभवेनाह–

स्वदृष्ट्या स्वयं निर्विशेषत्वहेतो-
र्न कर्त्ता न माता न भोक्ता ऽहमस्मि ॥
परैः सर्वसंसार आरोप्यते चे-
त्सुखं सर्वसंसारमारोपयन्तु ॥ ९९ ॥

स्वदृष्ट्येति ॥ १९९ ॥

एवं यथोक्तसाधनसम्पन्नस्याऽधिकारिणो यतेः सर्वोत्कृष्टत्वं दर्शयति—

नित्यादिसाधनचतुष्टयसम्पदुच्चैः
सेनां प्रगृह्य चतुरङ्गबलोपपन्नाम् ॥
अज्ञानशत्रुविजयेन परात्मलाभे
राज्ये स्थितो विजयते यतिचक्रवर्त्ती ॥ २०० ॥

नित्यादिति ॥ नित्याऽनित्यवस्तुविवेकादिसाधनचतुष्टयसम्पदेव चतुरङ्गानि हस्त्यश्वरथपदातीनि तेषां बलेनोपपन्नां परिपूर्णां उच्चैर्महतीं सेनां प्रगृह्य प्रकर्षेण स्वाधीनां कृत्वेत्यर्थः।शेषं स्पष्टम् ॥ २०० ॥

प्राप्तराज्यस्तु राजा मधुपानांतःपुरसेवनादिना यथेष्टवर्त्ती भवेन्न तथा ऽयमित्याह—

राज्ये स्थितो ऽपि यतिराट् न यथेष्टवर्त्ती-
स्वानन्दनित्यपरितृप्ततयाऽतिशुद्धः ॥
प्रारब्धभोगमनुभूय विषादहर्षौ
हित्वा प्रयाति परमां हि विदेहमुक्तिम् ॥२०१॥

राज्ये स्थित इति ॥ न यथेष्टवर्तीत्यत्र हेतुः स्वानन्दे- त्यादि । प्रारब्धेन कर्मणा भोगो यस्य स प्रारब्धभोगो जीव- श्चिदाभासस्तमनुभूय । अयमर्थः । चिदाभासो जीव एव सु- खदुःखभोक्ताऽहं तद्विलक्षणस्तत्साक्षित्वादित्यमनुभूयं अतएव हर्षविषादौ त्यक्त्वा विदेहमुक्तिं प्रयाति प्राप्नोतीत्यर्थः ॥ २०१ ॥

तस्य यथेष्टाचरणे न प्रवृत्तिरिति सप्रमाणमाह—

दृष्टा परं ब्रह्म रसान्निवृत्ति-
रित्याह गीतासु हरिः कृपालुः ॥
अथो यथेष्टाचरणं न तस्य
यद्यास्ति चेरसा न विपाकिता न ॥ २०२ ॥

दृष्ट्वेति ॥
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ।
इतिवचनान्न यथेष्टाचरणमित्यर्थः ॥ २०२ ॥

किञ्च—

नैवा ऽऽश्लेशः पुण्यपापक्रियाया
यद्यप्येवं शुद्धसंस्कारहेतोः ॥
पुण्ये श्रद्धा पाप्मनो नैव बुद्धि-
स्तत्वज्ञस्य प्रायशो ऽयं निसर्गः ॥ २०३ ॥

नैवेति ॥ "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्य- पदेशा"दितिसूत्रात् । पुण्यपापक्रियायाः नाऽऽश्लेषो न सम्बन्धो ऽकर्त्रात्मबोधस्य दृष्टत्वात् । यद्यप्येवं तथापि तस्य यथेष्टाचरणं न सम्भवतीत्याह । कुतः शुद्धसंस्कारहेतोस्तस्य पुण्ये श्रद्धा

पाप्मनः पापस्य शुद्धिर्न । अनेकजन्मसंसिद्धत्वात्तत्त्वज्ञस्याऽयं यथोक्तो निसर्गः स्वभाव एवेत्यर्थः ॥ २०३ ॥

यथोक्ताधिकारी संन्यासी दुर्लभ एवेत्याह—

संन्यासिनः कलहभैक्ष्यरताः सदण्डा
दैवेन दूषितधियः श्रवणातिदूराः ॥
दृश्यन्त एव बहवः परमार्थनिष्ठः
शान्तः समो यतिवरः क्वचिदेव दैवात् ॥ २०४ ॥

संन्यासिनइति ॥ श्रवणमतिदूरं येषां ते तथा मनननिदिध्यासने ततो ऽतिदूरे साक्षात्कारोऽपि ततोऽतिदूर इति किमु वक्तव्यमित्यभिप्रायः ॥ २०४ ॥

स्वस्य गुरुप्रसादात्स्वापरोक्षप्राप्त्या तं नमस्करोति—

यस्यामतं तस्य मतं विशुद्धम्
मानेन वाक्येन गुरोः परं यत् ॥
मौनेन बोधः परमं कृतोऽह-
मस्मीति तस्मै गुरवे नमोऽस्तु ॥ २०५ ॥

यस्येति॥गुरोः वाक्येन मानेन यत्परं ब्रह्म यस्याऽधिकारिणः अमतं ज्ञानकर्मत्वेनाऽमतम्। श्रुतिः "यस्याऽमतं तस्य मतं मतं यस्य न वेद सः" यस्य ब्रह्मामतम् अविषय इति निश्चयः तस्य तन्मतं सम्यग्ज्ञातं यस्य मतं विषयतया ज्ञातुं शक्यम् ब्रह्मेति धीः नाऽसौ वेद्देद भेदधीमत्वादेवमेवेति नियमार्थमुक्तम्। उक्तार्थमनुवदति। अविज्ञातं विजानतां ऽविज्ञातमविजानतामिति। तस्य मतं ज्ञानं विशुद्धं नेतरस्येति सम्बन्धः। एतादृशो बोधो येन गुरुणा अ-

यमहमस्मीति स्वापरोक्षं यथा तथा मानेन वाग्विषयत्वान्मम सम्पादितस्तस्मै नम इत्यर्थः ॥ २०५ ॥

नन्ववाग्विषयत्वेऽपि प्रमाणान्तरेण बोधः कुतः स्यान्नेत्याह—

अशब्दमस्पर्शमरूपमव्ययम्
तथा रसं नित्यमगन्धवच्च यत् ॥
अतोऽक्षमानेन न गम्यताऽस्य
तत्केवलं स्वाऽनुभवैकगम्यम् ॥ २०६ ॥

अशब्दमिति ॥ २०६ ॥

नाऽप्यनुमानगम्यमित्याह—

न तद्व्याप्तलिङ्गं किमप्यस्ति तस्मिन्
अतो नाऽनुमानेन गम्यं स्वरूपम् ॥
सदक्षं नवस्त्वन्तरं तेन किञ्चि-
दतो नोपमानेन गम्यं स्वरूपम् ॥ २०७ ॥

न तद्व्याप्तलिङ्गमिति ॥ २०७ ॥

प्रमाणजन्योऽतिशयो न शब्द-
प्रमाणतो ऽस्यात् न तेन गम्यम् ॥
न तद्विनाऽत्रानुपपत्तिरस्ति
नातः प्रकल्प्यं परमार्थसिद्धम् ॥ २०८ ॥

गुरुणा सह यः शिष्यस्य सङ्गस्तद्वैचित्र्यमाह—

अभावेन भावस्य सिद्धिर्न हि स्यात्

स्वरूपस्य षष्ठप्रमाणेन येन ॥
अतः केवलं स्वानुभूतिप्रमाणम्
परं वैष्णवं प्रत्यगात्मस्वरूपम् ॥ २०९ ॥

अभावेनेति॥येन षष्ठप्रमाणेनाऽभावस्य सिद्धिस्तेनाऽभावप्रमाणेनन भावसिद्धिरित्यर्थः ॥ २०९ ॥

जातः प्रबोधेन गुरुर्युवैव
शिष्यो ऽति वृद्धो गलितेन्द्रियादिः ॥
अतीव चित्रं गुरुशिष्यसञ्ज्ञा-
ज्ञातं न तद्वर्णयितुं सुशक्यम् ॥ २१० ॥

जातइति ।
चित्रं वटतरोर्मूले वृद्धः शिष्यो गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यस्तु च्छिन्नसंशयः ॥
इतिवृद्धवचनादयमर्थ उक्तो ऽनुभवसिद्ध इत्यर्थः ॥ २१० ॥

ननु
श्रेयः श्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ॥
तेषामसौ क्लेशल एव शिष्यते
नान्यथथा स्थूलतुषावघातिनाम् ।
इति भागवतोक्तेर्हरिभक्तिं विना केवलज्ञानं क्लेशमात्रमितनिरूपणे तथैवेत्यत आह—

ज्ञानी त्वात्मैवेतिकृष्णस्य वाक्या-
त्तत्त्वज्ञानी कृष्णतो नैव भिन्नः ॥

कृष्णस्तत्त्वज्ञानितो नैव भिन्न-
स्तस्मादेका ज्ञानभक्तिर्विशिष्टा ॥ २११ ॥

ज्ञानीति ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।

इति चतुर्विधभक्तिनिरूपणे तुरीयो भक्तो विशिष्यत इत्युक्तम् । तत्र हेतुः परस्परं परमप्रेमास्पदत्वाज्ज्ञानी त्वात्मैव मे मतमित्युक्तं भगवता । तस्माद्भज्यभजकयोरेकत्वेनाऽभेदभक्तिर्विशिष्यतेऽत इयं ज्ञानभक्तिफलभूता विशिष्टेत्यर्थः । अतः फलभक्तिनिरूपणात्र क्लेशमात्रमेतादिति भावः ॥ २११ ॥

किञ्च ॥

निज्ञाय भक्तिं परमां पवित्रां
न यत्र भेदावसरः कथंचित् ॥
इतोऽन्यथा भक्तिनिरूपणं य-
त्सा कर्मभक्तिः खलु भेदभानात् ॥ २१२ ॥

किमेतावताऽत आह—

श्रेयान्द्रव्याधज्ञतो ज्ञानयज्ञो
ह्येवं कृष्णः प्राह गीतासु देवः ॥
तस्माच्छ्रेष्ठा ज्ञानभक्तिर्विशिष्टा
मुख्या पुंभिः पुण्यपुञ्जेन लभ्या ॥ २१३ ॥

श्रेयानिति ॥ २१३ ॥

इदानीं ग्रन्थकर्तृत्वाभिमानपरिहारपूर्वकं संप्रदायकर्त्राचार्यनमस्काररूपं मङ्गलमाचरति—

निर्मथ्य वेदान्तसमुद्रमेत-
त्स्वबोधरत्नं सुलभं मनोज्ञम् ॥
अकारि यन्माधवभिक्षुणा तत्
मुमुक्षुभिर्धार्यमतिप्रयत्नात् ॥ २१४ ॥

निर्मथ्येति ॥ २१४ ॥

पूर्वाचार्योच्छिष्टलेशोऽयमुक्तो
बुद्धिस्थेम्ने स्वस्य न प्रौढिवादः ॥
विद्वांसो येऽनुग्रहार्थे समर्था-
स्तेभ्यो भक्त्या मे प्रणामोऽयमस्तु ॥ २१५ ॥

पूर्वेति ॥ २१५ ॥

स्वात्मानुभवादर्शाख्यं प्रकरणं समाप्तम्

यस्य श्रीपरमेष्ठिसंज्ञगुरुरित्यासीत्सरामाश्रमः
किञ्चासीत्परमो गुरुः सुरतरुर्नारायणेत्याश्रयः ॥
साक्षान्माधव आश्रमो गुरुतरः पूर्णं परब्रह्म यो
वर्वर्ति प्रथितोऽथ तेन लिखितो ग्रन्थोऽतिविघ्नच्छिदः ॥ १ ॥

श्रीमन्नारायणाश्रमशिष्यमाधवाश्रमविरचितं स्वा-
ऽनुभवादर्शाख्यं प्रकरणं समाप्तम् ॥